पार्श्वे मानस्तोक इति मन्त्रेण चन्दनेन शलाकया चिन्हं कुर्य्यात् ॥ मानस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामि नो वधीर्हं-विष्मन्तः सदमित्वा हवामहे ॥ वामपार्श्वे वृषाह्यसीति मन्त्रेण चक्राकारेण चिन्हं कुर्यात् ॥ वृषाहिया । सिभा-नू२३ना । द्युमतंत्वाहावा१माहा२३४यि । पवा३ । मानसु-वो२३४वा । हू२३४शाम् ॥ इति कर्मसमाप्तेः परं तप्तलो-हशलाकया त्रिशूलं चक्रञ्च चिन्हमन्येन कारयेत् ॥ ततो वृषभेण वत्सतरीमनुक्राम्य तामनामिकया स्पृष्ट्वा ऽनुम-न्त्रयेत् काम्यासीति मन्त्रेण । काम्यासि प्रियासि हव्या-सि इडे रन्ते सरस्वति महि विश्रुति ॥ ततो वृषभवत्सत-रीणां पुच्छेषु तर्प्पणम् । अग्नेः पश्चात्प्राङ्मुखं वृषं वत्स-तरीश्च संस्थाप्य देशकालौ सङ्कीर्त्त्य, प्राचीनावीत्ती, अ-मुकगोत्रस्यामुकशर्मणः पितुः प्रेतस्य प्रेतत्वविमोचनद्वारा-ऽक्षय्यपुण्यलोकावाप्त्यर्थं वृषभवत्सतरीपुच्छे तर्प्पणं क-रिष्ये । ताम्रपात्रस्थं तिलजलमादाय पुरुषसूक्तेनोपवीति-ना तर्पणं कुर्य्यात् । उहु वा हाउ । ३ । सहस्रशीर्षाः पुरू-२३षाः । सहस्राक्षः सहस्रा२३पात् । सभूमिꣳसर्वतोवा-२३र्वा । अत्यतिष्ठद्दशांगू२३लाम् । उहु वा हाउ । २ ।

२ १ २ ऽ २ २ १ १ १ १ १ २ १ २ २
उहु वा३हाउ । वा३ । इट्इडा२३४५ ॥ १ ॥ उहुवौहोवा-
– २ १२ २ २ २ १२ २ २ २ २ १
२ । ३ । त्रिपादूर्ध्वउदैत्पुरू२३षाः । पादोस्येहाभवत्पू२३-
२ १ २ २ १ २ २ २ १२
नाः । तथाविष्वꣳवियक्रा२३मात् । अशनानशने आ२३-
२ २ १ २ २ – २ १ २ १ ^ ३ ५२ २
भी । उहुवौहोवा२ । २ । उहुवौ । हो२ । वा२३४ । औहो-
३ ५ २ १ २ २ – २ १ २ १ ^ ३
वा । ई२३४डा । उहुवौहोवा२ । २ । उहुवौ । हो२ । वा२-
५२ २ ३ ५ २ १ २ २ – २ १ २
३४ । औहोवा । सू२३४वाः । उहुवौहोवा२ । २ । उहुवौ ।
१ ^ ३ ५२ २ ३ १ १ १ १ १ २ २
हो२ । वा२३४ । औहोवा । ऊ२३४५ ॥ २ ॥ इयौहोवा२ ।
१ २ २ २ १ २ २ १२ २
३ । पुरुषएवेदꣳसा२३र्वम् । यद्भूतं यच्चभावा२३याम् ।
१२ २ २ २ २ २ १२ २ २ १ २ १ २
पादोस्यसर्वाभूता२३नी । त्रिपादस्यामृतंदा२३इवी । इयौ-
२ – १ २ १ ^ ३ ५२ २ ३ ५
होवा२ । २ । इयौ । हो२ । वा२३४ । औहोवा । ई२३४डा ।
१ २ २ – १ २ १ ^ ३ ५२ २ ३
इयौहोवा२ । २ । इयौ । हो२ । वा२३४ औहोवा । ज्यो२३-
५ १ २ २ – १ २ १ ^ ३ ५२ २
४तीः । ईयौहोवा२ । २ । इयौ । हो२ । वा२३४ । औहो-
३ १ १ १ २२ १२ २ २ १ २
वा । ई२३४५ ॥ ३ ॥ हाउ३ । तावानस्य । महा२३यिमा३ ।
२२ १ २ २ २ २ १२ २ २२ २ १२
हाउ३ । ततोज्यायाꣳश्चपूरू२३षा३ः । हाउ । ३ । उतामृ-
२ २ २२ १ २ २ २ १२ २
तत्वस्येशा२३ना३ः । हाउ । ३ । यदन्नेनातिरोहा२३ती३ ।

२ २ १ १११ २ऽ १ २
हाऽउ३ । वा३ । इट्इडा२३४५ ॥ ४ ॥ हाउ३वा । ततो-
२ १र २र २ऽ २ १र २र १ २ १र २ २
विराडजायत । हाउ३वा । विराजोअधिपूरुषः । हाऽउ३वा ।
१ २र १र २ २ २ १र र २ १र २ १
सजातोअत्यरिच्यत । हाऽउ३वा । पश्चाद्भूमिमथोपुरः ।
२ ^ ३ १११
हाऽउ३वा३ ई२३४५ ॥ ५ ॥ ततो दक्षिणाभिमुखः पाति-
तवामजानुः प्राचीनावीती गोत्रं शर्म्माणं प्रेतं पितरं त-
र्प्पयामि । तत उपवीती वत्सतरीणाम्मध्ये वृषमुत्सृजेत् ।
तद्यथा–पाद्याद्युपचारैर्वृषं सम्पूज्य, अद्येत्याद्यमुकगोत्रस्या-
मुकप्रेतस्य पितुः प्रेतत्वविमोचनद्वाराऽक्षय्यपुण्यलोकावा-
प्तिकामो यथाशक्त्यलङ्कृतं त्रिशूलचक्राङ्कितं रुद्रदैवतमि-
मं वृषभं वत्सरीभिः सहोत्सृजामीति सङ्कल्प्यैतं युवानं
परिवो ददामीतिमन्त्रपठनपूर्वकमुत्सृजेत् । मन्त्रश्च । एतं
युवानं परि वोददामि तेन क्रीडन्ति चरथ प्रियेण । मा
नः साप्तजनुषा सुभगा रायस्पोषेण समिषा मदेम ॥ ततः
५ र १ र ऽ १
कर्णे सामानि श्रावयेत् । तद्यथा । उपत्वाजा । मयो२गि ।
२ १ ७ – १ २र १ २ १ ७ –
र ओ यिययूरः । दायिदिशतीर्हविष्क्र । त । ओ यिययूरः ।
र १र २ ३ २ ४ १ २ १र
वायोराऽ२३नी । कया३स्थाऽ५यिरा६५६न् । अश्वा३गावा-
१ १ १ १ ५ र र ५र १ २
ऽ२३४५ः ॥ १ ॥ उपत्वाजामा६योगिराः । दायिदिश ।
१ ७ ^ ३ ५ ५रर र र ४ ५ १
तायिः । हवीऽ२ष्का२३४र्त्ताः । वायोरनाहाइकायास्थायि-

२ ३र ५ ४५ ४ ५र ४
रा । औहो२३४वा । ईडा ॥ २ ॥ ३ ॥ १ ॥ प्रसम्राजोहा-
१ २ २ १ २ २ १ ३
यि । चार्षणी३नाम् । आयिंद्राऽस्तो३ता२ । नव्या२गा२-
५ ५ ३२ ३ ५र ३ २ ४
३४यिर्भीः । ना२रमोयि । नृ । षाहमो३यि । मंऽहा५यिष्ठां ।
४ ५ ५र र २ १ २ ३ २ ३
हो५ई । डा ॥ २ ॥ सोमप्पूषा । च चाइलतूः । आयायो-
५ १ र २र र १ ३ २ ३ ५
२३४वा । वायिश्वासाऽसुक्षिती । नाम् । अयावो२३४वा ।
१ ७ ३ २ ४ ४ १र २ १ ३ १
दाइवत्रारा२२३ । थियो३हाऽ५ईता५६५ । गावो२अश्वा२-
१ १ १ २र २र र र २ २ १ २र १
३४५ः । हाउ३ । गावोहा०४ । हाऽउ३वा । सहर्षभास्सहे-
२र १र २ १ र २र १र २ १ २र र र २
वत्साउदेत । हाउ३वा । विश्वारूपाणिबिभ्रतीर्द्व्यूर्भीः । हा-
२ १ २ १ २ १ र २ र १ २ २ १र
उ३वा । उरुप्पृथुरयं वो अस्तुलोकः । हाउ३वा । इमा
र २ र १ २ १ २ १ २ १
आपस्सुप्रपाणा इहस्त । हाउ३वा । अश्वमिष्टये३हस् ॥ २९ ॥
२र २र
आवोराजानं० ॥ तद्वौहासामचतुष्टयम्० ॥ हाउ३ । आ-
३ ४र २र १र २ १ २ ३ ४ ५
ज्यदोहम् । ३ । मूर्द्धानंदायि । वा३अर । तिम्पृथिव्याः ।
२र १र २ १ र २र ३ ४ ५ २ १ २
वैश्वानराम् । ऋतआ । जातमग्नीम् । कविंऽसम्रा । जा३-
१ २ ३ ४र ५ २र १ २ ० १ २ ३ ४र ५
मति । थिंजनानाम् । आसन्नप्पा । त्रा३जन । यन्तदेवाः ।
२र २र ३ ४र ५ २र ३ ४ ५ २र
हाउ३ । आज्यदोहम् । २ । आज्यदोऽ५हाउ । वा । ए ।

२र १२ २र २र १ ३ १११
आज्यदोहम् । २ । ए । आज्यदोहा२३४५म् ॥ १६ ॥
२र २र २१२ २र१र
हाउ । ३ । हुम् चिदोहम् । ३ । मूर्द्धानंदायिपूर्ववत् ।
२र २र १२ २ ऽ२ २ ३१
हाउ । ३ । हुम् चिदोहम् । २ । चिदो३हाउ । वा३ । ई२३-
११ २र १२ २र१र
४५ ॥ १७ ॥ हाउ । ३ । च्योहम् । ३ । मूर्द्धानंदायिपूर्व-
२र १२ १ऽ२ २ २
वत् । हाउ । ३ । च्योहम् । २ । च्यो३हाउ । वा३ । ए३ ।
२१
ऋतम् ॥ १८ ॥ अधिपत इत्यादित्रीणि वामदेव्यश्चान्ते ॥
ततो यथेष्टं यूथंयूथं पर्य्यटेतिमन्त्रेण वृषभं चालयेत् ।
ततो ब्रह्मदक्षिणा, चमसनिनयनम्, वामदेव्यगानम् ।
तदङ्गं ब्राह्मणभोजनमितिवृषोत्सर्गप्रयोगः ॥

अथ कपिलादानम् ॥ जलेन कपिलामासिच्योदङ्मुखं ब्राह्मणमुपवेश्य, कुशादीन्यादाय, देशकालौसङ्कीर्त्यैकादशाहे गोत्रस्यामुकप्रेतस्य प्रेतत्वविमोचनपूर्वकमक्षय्यपुण्यलोकावाप्त्यर्थं सुवर्णशृङ्गीं यथाशक्त्यलङ्कृतामिमां सवत्सां कपिलाममुकगोत्रायामुकशर्म्मणे तुभ्यमहं सम्प्रददे । अद्यानुष्ठितसोपकरणकपिलादानस्य सम्पूर्णफलावाप्त्यर्थं इदमाग्नेयं हिरण्यं तुभ्यमहं सम्प्रददे । ॐ प्रतिगृह्णामीयुक्त्वा गोपुच्छं गृहीत्वा स्वशाखानुसारेण कामस्तुतिं पठेत् । कपिलाया अभावे केवलं गोदानं कुर्य्यात् । पूर्ववन्महिषीदानं कुर्य्यात् । तत्र विशेषो यमदैवतां महिषीमिति । तदङ्गं हिरण्यदानम् ।

ततो मध्याह्ने स्नात्वा आद्यमासिकैकोद्दिष्टश्राद्धमारभेत् । तत्र गोभिलीयश्राद्धकल्पसूत्रम् । "अथैकोद्दिष्टमेकपवित्रमेकोऽर्घ्य एकः पिण्डो नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्न उपतिष्ठतामित्यक्षय्यस्थाने ऽभिरम्यतामितिविसर्गः" ॥ अन्येऽप्यत्र सपिण्डीकरणादर्वाचीनैकोद्दिष्टश्राद्धेषु वर्जनीयाः पदार्था रत्नावल्याम् । "आशिषो द्विगुणा दर्भा जपाशीः स्वस्तिवाचनम् । पितृशब्दः स्वसम्बद्धशर्मशब्दस्तथैव च ॥ पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम् । तृप्तिप्रश्नश्च विकिरच्छेषप्रश्नस्तथैव च ॥ प्रदक्षिणविसर्गश्च सीमान्तगमनं तथा । अष्टादश पदार्थांश्च प्रेतश्राद्धे विवर्जयेत्" ॥ तस्य प्रयोगः । मध्याह्ने प्रातर्निमन्त्रितं सुस्नातं ब्राह्मणं स्वागतं कृत्वा, पादौ प्रक्षाल्य, कृताचमनं ब्राह्मणं श्राद्धदेशे दक्षिणाग्रकुशेषूदङ्मुखमुपवेश्य, तिलसर्षपान् श्राद्धदेशे विकीर्य्याचारात्कर्मसमाप्तिपर्य्यन्तं दीपं स्थापयेत् । ततः कर्त्ता कुशोदकेन श्राद्धीयद्रव्याणि सम्प्रोक्ष्य, प्राङ्मुखो दर्भेष्वासीनो दर्भान्धारयमाणः प्राणानायम्य, देशकालौ सङ्कीर्त्त्य, प्राचीनावीतीगोत्रस्यामुकप्रेतस्य पितुः प्रेतत्वविमोचनार्थं सम्भवन्नियमोपचारदक्षिणाभिराद्यमासिकैकोद्दिष्टश्राद्धमहं करिष्ये इति सङ्कल्पः । ततो देवताभ्य इति त्रिर्जपेत् । देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमोनमः ॥ ततः प्राचीनावीती दक्षिणाभिमुखः सव्यं जान्वाच्य, कुशतिलजलान्यादाय, विप्रहस्ते जलमासिच्य, गोत्रायामुकप्रेताय पित्रे

आद्यमासिकैकोद्दिष्टश्राद्धे इदमासनम् । अस्त्वासनमिति-भोक्ता । प्रेतपित्रे भवता क्षणः कर्त्तव्यः । ॐ तथा । प्राप्नोतु भवान् । प्राप्नवानीति भोक्ता । ततः कर्त्ता प्राङ्मुख उपविश्य, छत्राय नम इति सम्पूज्य, विप्रहस्ते जलं दत्वा, छत्रमभिषिच्य, कुशादिकं गृहीत्वा, गोत्रस्य प्रेतस्य पितु-रातपादिनिवृत्त्यर्थमिदं छत्रममुकशाखाध्यायिने गोत्राय शर्म्मणे तुभ्यमहं सम्प्रददे । ॐ प्रतिगृह्णामि । छत्रदा-नस्य सम्पूर्णफलावाप्त्यर्थमिदं हिरण्यं तुभ्यमहं सम्प्रददे । एवं वक्ष्यमाणद्रव्यदानेषु ब्राह्मणपूजनं, ब्राह्मणकरे जल-दानं देय द्रव्याभिषेचनं, देयद्रव्यदानं, तदङ्गं हिरण्यदा-नञ्च । तत उपानहोर्द्दानम् । यथाशक्ति यथासम्भवमन्या-न्यपिं दानानि दद्यात् ॥ नावाहनं निषेधात् । ततः प्रा-चीनावीती । दक्षिणं जान्वाच्य प्रेतब्राह्मणस्य पुरतस्ति-लान्विकिरेदपहता इतिमन्त्रेण । अपहता असुरा रक्षाᳬसि वेदिषदः इति । ततो दक्षिणाग्रकुशे एकमर्घ्यपात्रं निधाय तस्मिन्नेकं पवित्रं दक्षिणाग्रमन्तर्द्धाय तस्मिन् शन्नोदेवी-रितिमन्त्रेणाप आसिञ्चति । शन्नो देवीरिति सिन्धुपो-गायत्र्याप अपामासेचने विनियोगः । शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः ॥ तत्र तिलो-सीतिमन्त्रेण तिलानावपति । पितृनिमाल्लोकान्प्रीणया-हीत्यत्र प्रेतमिमं लोकं प्रीणयाहीति विशेषः । तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः प्रक्तः स्वधया प्रेतमिमं लोकं प्रीणयाहि नः ॥ ततो विप्रहस्ते शुद्धोदकं निनीयार्घ्यपात्रस्थपवित्रमादाय विप्रहस्ते दक्षिणाग्रं नि-

धाय, या दिव्या आपः पयसा सम्बभूवुर्य्या अन्तरिक्ष उत पार्थिवीर्याः । हिरण्यवर्णा यज्ञियास्तान आपः शिवा शꣳ स्योना सुहवा भवन्तु ॥ इतिमन्त्रान्ते आद्यमासिकै-कोद्दिष्टश्राद्धे गोत्रामुकप्रेतैतत्तेऽर्घ्यम् । अस्त्वर्घ्यमिति भोक्ता । अर्घ्यपात्रं वामपार्श्वे प्रेताय पित्रे स्थानमसीत्य-धोमुखं संस्थाप्य तदुपरि पवित्रं विन्यसेत् । ततो गन्ध-पुष्प-धूप-दीप-वस्त्र-यज्ञोपवीत-ताम्बूलानि मया दीयन्ते तवोपतिष्ठन्ताम् । गोमयादिनोपलिप्ते देशे भोजनपात्रं संस्थाप्यान्नं व्यञ्जनादि संस्थापयेत् । व्यञ्जनादिसहितमा-तृप्तेर्दत्तं दास्यमानञ्चाद्यमासिकैकोद्दिष्टश्राद्धे ऽमुकगोत्रा-यामुकप्रेताय न मम । ततो ऽमुकप्रेत सत्यं त्वर्त्तेन परि-षिञ्चामि । पूर्वापोशनार्थमुदकं दत्वा, सव्याहृतिकां गा-यत्रीम्मधुमतीश्च त्रिर्जपित्वा, मधुमधुमधु इत्युक्त्वा यथा-सुखं जुषस्वेति वदेत् ॥ मन्त्रः । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥ मधु नक्तमु-तोषसि मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता ॥ माधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्य्यः । माध्वीर्गावो भवन्तु नः ॥ तत आपोशनं कृत्वा प्राणाहुतीः कुर्यात् । भोजनसमये न पितृसंहितापठनं, किन्तु व्याहृतिपूर्विकां सावित्रीं गायत्रं माधुच्छन्दसीं च पठेत् । नात्र विकिर-दानम् । तत उत्तरापोशनार्थं जलं दत्वा पूर्ववन्मधुवाता ऋतायत इत्यृचं त्रिर्जपित्वा, मधुमधुमधु इति त्रिर्जपि-त्वाऽऽचान्ते स्वदितमिति पृच्छेत् । अस्तु स्वदितम् । ना-

त्रान्नशेषाभ्यनुज्ञा । तत उच्छिष्टसन्निधौ बाहुमात्रप्रदेशे चतुरस्रं मण्डलं विधाय, गोमयेनोपलिप्य, दक्षिणाप्रवणां सैकतेन वेदिकां कृत्वा, ऽभ्युक्षेत् । नात्रोल्लेखनम् । नोल्मुकनिधानम् । नावाहनम् । समूलं कुशं दक्षिणाग्रमास्तीर्य्यामुकगोत्रामुकप्रेताद्यमासिकैकोद्दिष्टश्राद्धे पिण्डस्थाने ऽवनेनिक्ष्वेति तिलोदकं निनीय, बिल्वफलमात्रं पिण्डं गृहीत्वा, अमुकगोत्रामुकप्रेत एष ते पिण्डः । पिण्डपात्रक्षालनजलेन प्रत्यवनेजनम् । अत्र प्रेत मादयस्व यथाभागमावृषायस्व, इति जपित्वा ऽप्रादक्षिण्येन पर्य्यावृत्योदङ्मुखो दक्षिणाभिमुखो वा ऽनुच्छ्वसन्नमीमदस्व प्रेत यथाभागमावृषायिष्ट । अमुक गोत्रामुकप्रेत एतत्ते वासः इति सूत्रं दद्यात् । अमुकगोत्रामुकप्रेत एष ते गन्धस्तवोपतिष्ठताम् । एवं धूप-दीप-नैवेद्यादिभिः पिण्डं सम्पूज्य, भोक्तुर्हस्तक्षालनार्थमुदकं दत्वा, कृताचमने ब्राह्मणे सुसम्प्रोक्षितमस्त्विति द्विजाग्रभूमिं जलेनासिञ्चेत् । अस्त्विति प्रतिवचनम् । शिवा आपस्सन्त्विति द्विजहस्ते जलं प्रयच्छेत् । सौमनस्य मस्त्विति भोक्तृहस्ते कुसुमानि । अक्षतं चारिष्टं चास्त्वित्यक्षतान्दद्यात् । सव्यं जान्वाच्य कुशोदकं गृहीत्वा ऽमुकगोत्रस्यामुकप्रेतस्य दत्तमाद्यमासिकैकोद्दिष्टश्राद्धमुपतिष्ठतामित्यक्षय्योदकस्थाने । नात्राघोराः पितरः सन्त्विति । पिण्डोपरि पवित्रं निधायार्घ्यपात्रेण तूष्णीं जलधारां दद्यात् । पिण्डपात्रचालनम् । दक्षिणादानम् । अमुकगोत्रामुकप्रेत इयं ते दक्षिणा । दातारो

नोऽभिवर्द्धन्तामित्यादि। वाजेवाज इतिमन्त्रेण नोत्थापनम्। किन्त्वमुकगोत्रामुकप्रेत अभिरम्यतामिति ब्राह्मणस्योत्थापनम्। ततो यथाशक्ति बहुमूल्यानि गोवाहनयानदासीदासमहागृहाण्यारामादीनि प्रेतोद्देशेन ब्राह्मणाय दद्यात्। एवमेकादशाहश्राद्धं कृत्वा कृताचमनः कुशेष्वासीनः कुशपवित्रपाणिः प्राणानायम्य देशकालौ सङ्कीर्त्त्य गोत्रस्यामुकप्रेतस्य पितुर्मरणदिनप्रभृति दिनोनसंवत्सरपर्य्यन्तं प्रत्यहमामान्नसहितोदककुम्भदानं करिष्ये इति सङ्कल्प्य, पुनः कुशादिकमादायाद्यदिनेऽमुकगोत्रामुकप्रेत अयमामान्नोदककुम्भो मया दीयते तवोपतिष्ठतामित्युत्सृज्य तदुभयं ब्राह्मणाय दद्यात्। एवं प्रत्यहं वर्षान्तसपिण्डनपक्षे। द्वादशाहे सपिण्डने कृते प्रत्यहमामान्नकुम्भदानं पितृधर्मेण न तु प्रेतधर्म्मेण। तद्यथा। गोत्र पितः शर्मन् तुभ्यमिदमासन स्वधा। अद्य दिनेऽमुकगोत्रामुकशर्मन् पितरयमामान्नोदककुम्भस्तुभ्यं स्वधेति दद्यात्। ततः कुशादिकमादाय मयाऽनुष्ठितस्यामान्नोदककुम्भदानस्य सर्वफलावाप्त्यर्थं चन्द्रदैवतं रजतममुकशाखाध्यायिने तुभ्यमहं सम्प्रददे। इति प्रत्यहं कुम्भदानप्रयोगः। इत्येकादशाहकृत्यम्॥

अथ मासिकश्राद्धप्रयोगः। आद्यमासिकैकोद्दिष्टश्राद्धवच्चतुर्द्दशमासिकश्राद्धानि कर्त्तव्यानि। तत्रप्रयोगक्रमः श्राद्धपूर्वदिने रात्रौ ब्राह्मणनिमन्त्रणम्। अथवा, श्राद्धदिने प्रातर्निमन्त्रणम्। श्राद्धदिने प्रातर्मध्यान्हे च कर्त्तुः

स्नानम् । भोक्तुराह्वानम् । श्राद्धदेशे रक्षादीपस्थापनं तत्र सर्षपतिलादिप्रक्षेपः । अद्य तिथौ गोत्रस्य प्रेतस्य पितुः प्रेतत्वविमोचनार्थं षोडशश्राद्धान्तर्गतप्रथममासिकश्राद्धमहं करिष्ये । तत आसनेषूपवेशनमपहता इतिमन्त्रेण तिलविकरणम् । अर्घ्यस्थापनमर्घ्यदानमर्घ्यपात्रन्युब्जकरणं गन्धादिदानम् । भोजनपात्रस्थापनम् । अन्नादिपरिवेषणमन्नसङ्कल्पः । आपोशनार्थं जलदानम् । मधुमत्यादिजपः । उत्तरापोशनार्थे जलदानम् । पुनर्मधुमत्यादिजपः । तृप्तिस्थाने स्वदितमिति प्रश्नः । नान्नशेषानुज्ञा । उच्छिष्टसमीपे पिण्डदानमुदकसेचनपुष्पदानाक्षतदानानि । अक्षय्योदकदान उपतिष्ठतामिति । गोत्रं नो वर्द्धतामित्यादि । ऊर्जं वहन्तीत्यत्र तूष्णीमुदकधारा । अभिरम्यतामिति विसर्गः । एवं द्वितीयादिमासादिषु ॥ तत्तन्मासे तत्तन्मासिकश्राद्धमित्यूहः । तानि च षोडश श्राद्धानि । प्रथममासे मरणदिने कर्त्तव्यं श्राद्धमाद्यमासिकम् । प्रथमदिनस्याशौचावरुद्धत्वाद्वचनबलात्तदेवैकादशाहे ऽनुष्ठीयमानम् । ततः प्रथममासिकम् । द्वितीयमासिकम् । त्रयपक्षमासिकम् । तृतीयमासिकम् । चतुर्थमासिकम् । पञ्चममासिकम् । ऊनषाणमासिकम् । षाणमासिकम् । सप्तममासिकम् । अष्टममासिकम् । नवममासिकम् । दशममासिकम् ॥ एकादशमासिकम् । ऊनद्वादशमासिकम् । द्वादशमासिकम् ॥ १५ ॥ सपिण्डीकरणम् ॥ १६ ॥ एवं षोडशमासिकानि । "तदुक्तं 'कर्मप्रदीपे' । द्वादश प्रतिमास्यानि आद्यषाणमासिके तथा । सपिण्डीकरणं चैव एतद्वै श्राद्धषो-

डशम्॥ एकाहेन तु षण्मासा यदा स्युरपिवा त्रिभिः। न्यूनाः संवत्सरश्चैव स्यातां षाण्मासिके तदा॥ सपिण्डीकरणादूर्ध्वं न दद्यात्प्रतिमासिकम्। एकोद्दिष्टेन विधिना दद्यादित्याह गौतमः''॥ अधिमासे सप्तदशमासिकानि भवन्ति। एतानि यथाकालं कृत्वा, संवत्सरान्ते सपिण्डीकरणमथवैकादशाहे आद्यमासिकं कृत्वा, द्वादशभिर्दिवसैः प्रथमादीनि द्वादशमासिकानि क्रमेण कृत्वा, त्रयोदशे दिने सपिण्डनं कुर्य्यात्। अस्मिन्पक्षे षष्ठदिने ऊनषाण्मासिकं कृत्वा षष्ठमासिकं कुर्य्यात्। द्वादशदिने ऊनवार्षिकं कृत्वा द्वादशमासिकं च कुर्य्यात्। त्रयोदशेऽन्हि सपिण्डनम्। यद्येकादशमासाभ्यन्तर अधिमासपातश्चेत्त्रयोदशे दिवसे ऊनवार्षिकं त्रयोदशमासिकञ्च कुर्य्यात्॥ अस्मिन्पक्षे चतुर्द्दशे ऽन्हि सपिण्डीकरणम्। द्वादशाहे सपिण्डीकरणपक्षे। एकादशाहे आद्यमासिकं कृत्वा द्वादशाहे ऽपकृष्य चतुर्द्दश मासिकानि भिन्नतन्त्रेण समानतन्त्रेण वा कृत्वा सपिण्डनं कुर्य्यात्॥

अथ सपिण्डीकरणप्रयोगः॥ तत्र श्राद्धकल्पसूत्रम्। "अथ सपिण्डीकरणं पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा यदहर्वा वृद्धिरापद्येत तदहश्चत्वारि पात्राणि सतिलगन्धोदकानि पूरयित्वा, त्रीणि पितॄणामेकं प्रेतस्य, प्रेतपात्रे पितृपात्रेष्वासिञ्चति ये समाना इति, एतेनैव पिण्डो व्याख्यातोऽव्याख्यातः'' इत्येतैः सूत्रैः सपिण्डीकरणप्रयोग उक्तो ऽतोऽन्यन्मासश्राद्धवत्कर्त्तव्यम्। द्वादशाहे सपि-

ण्डीकरणमन्यत्रोक्तम् । मन्दबोधाय प्रयोग उच्यते । तच्च सपिण्डीकरणमेकोद्दिष्टपार्वणोभयात्मकम् । प्रेतस्य पितृपितामहप्रपितामहा उद्देश्याः प्रेतश्च । कालकामसंज्ञका विश्वेदेवाश्च । सपिण्डीकरणं करिष्यन् तत्पूर्वंदिने रात्रौ ताम्बूलादिकं गृहीत्वा, विप्रगृहं गत्वा, प्राङ्मुखं ब्राह्मणमुपवेश्य, देवधर्मेण स्वयमुपविश्य, गोत्रस्यामुकप्रेतस्य मम पितुः श्वः सपिण्डीकरणश्राद्धं कर्त्ताऽस्मि तत्र कालकामसंज्ञक वैश्वेदेवार्थे भवता क्षणः कर्त्तव्यः । ॐ तथेति प्रत्युक्तिः । प्राप्नोतु भवान् । प्राप्नवानि । तत उदङ्मुखं ब्राह्मणं प्रेतपित्रर्थे वृणुयात् । अमुकगोत्रस्यामुकप्रेतस्य श्वः सपिण्डीकरणं भविष्यति तत्र प्रेतरूपपित्रर्थे भवता क्षणः कर्त्तव्यः । प्राप्नोतु भवान् । प्राप्नवानि । एवं प्रेतस्य पित्रर्थे, प्रेतस्य पितामहार्थे, प्रेतस्य प्रपितामहार्थे, प्रत्येकमेकं वृणुयात् । निमन्त्रितब्राह्मणो नान्यस्यान्नमश्नीयात् । कर्त्ता भोक्ता च मैथुनादिकं वर्ज्जयेत् । सपिण्डीकरणदिवसे कर्त्ता स्नात्वा कृतनित्यक्रियः भोक्तॄणां श्मश्रुकर्म कारयित्वा, ताम्रपात्रे तैलोद्वर्त्तनादिकं दत्वा, मध्याह्ने शुचौ देशे स्वयं सपिण्डद्वारा वा पाकमारभेत् । प्रेतार्थं पृथक् पाकः । अन्येषां पृथक् एकपाकः । ततो मध्याह्ने कृतस्नानः कर्त्ता सुस्नातान्ब्राह्मणान् श्राद्धप्रदेशमागतान्नमस्कारादिभिः सत्कृत्य, स्वागतं पृष्ट्वा, पाद्यादिकं दत्वा, श्राद्धप्रदेशे देवार्थे ब्राह्मणं प्राङ्मुखमुदगग्रेषु दर्भेषूपवेश्य प्रेतार्थे दक्षिणाग्रेषु दर्भेषूदङ्मुखं ब्राह्मणमुपवेश्यान्यत्र दक्षिणाग्रदर्भेषु प्रेतस्य पित्राद्यर्थे प्रत्येकमेकं त्रीन्त्री-

न्वोपवेशयेत् । पातितदक्षिणजानुरुपवीती प्राङ्मुखो देवतीर्थेन ब्राह्मणस्य दक्षिणत उदङ्मुख उपविष्टो यवैर्देवं परिचरेत् । पातितवामजानुः प्राचीनावीती दक्षिणामुखो द्विगुणदर्भैः पितृतीर्थेन तिलैः पितॄन् प्रेतं च परिचरेत् । श्राद्धसमाप्तिपर्य्यन्तं दीपं स्थापयेत् । कर्त्ताऽऽचम्य कुशपवित्रपाणिः प्राङ्मुखः प्राणानायम्य देशकालौ सङ्कीर्त्य प्राचीनावीती अमुकगोत्रस्य पितुरमुक प्रेतस्य प्रेतत्ववि-मोचनद्वारा वसुरुद्रादित्यस्वरूपप्राप्त्यर्थं सपिण्डीकरणश्राद्धं पार्वणैकोद्दिष्टविधानेन करिष्ये । तत उपवीती यवजलसहितकुशानादाय कालकामसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्वाहेदमासनमिति हस्ते जलमासिच्यासनं दक्षिणभागे उदगग्रकुशान् दद्यात् । प्राचीनावीती सतिलजलद्विगुणकुशानादायामुकगोत्रायामुकप्रेतायेदमासनमुपतिष्ठतामिति हस्ते जलमासिच्य वामभागे आसनं दद्यात् । तत उपवीती कृताचमनः । इतःपरमपि प्रेतकार्य्यं कृत्वाऽऽचम्यान्यत्कार्य्यं कुर्य्यात् । प्राचीनावीती सतिलजलद्विगुणकुशानादाय गोत्राय वसुरूपाय शर्मणे प्रेतस्य पित्र इदमासनं स्वधा हस्ते जलमासिच्य वामभागे कुशान्दद्यात् । एवं प्रेतस्य पितामहाय प्रेतस्य प्रपितामहायासनं दद्यात् । ततो यवदर्भानादायोंकारं कृत्वा कालकामसंज्ञकान् विश्वान्देवानावाहयिष्ये इति पृष्ट्वा ऽऽवाहयेत्यनुज्ञातो भोक्तुर्दक्षिणजानु स्पृशन्विश्वेदेवास आगतेत्यादिमन्त्रत्रयान्ते यवदर्भान्देवपुरतो विकिरेत् । विश्वेदेवास आगत शृणुताम इमꣳ हवम् । एदं बर्हिर्निषीदत ॥ वि-

श्वेदेवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उपद्यविष्ठ। ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि माद- यध्वम् ॥ ओषधयः संवदन्ते सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥ ततः प्रेतस्य नावाहनम्। ततः प्राचीनावीती तिलानादाय प्रेतस्य गोत्रान् पितृपितामहप्रपितामहानमुकामुकशर्मणो भवत्स्वावाह- यिष्य इति पृच्छेत्। आवाहयेत्यनुज्ञातः उशन्तस्त्वेत्या- दिभिः प्रेतस्य पित्रादीन् पृथक्पृथगावाहयेदेवमितरयोः। भोक्तुर्वामजानु स्पृशन्नोंकारं कृत्वा, उशन्तस्त्वा निधीम- ह्युशन्तः समिधीमह्युशन्नुशत आवह पितॄन् हविषे अत्त- वे ॥ एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्वि- णेभिः। दत्तास्मभ्यं द्रविणेहभद्रꣳ रयिं च नः सर्ववीरं नियच्छत ॥ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन्यज्ञे स्वधया मदन्त्वधिब्रुवन्तु ते अवन्त्वस्मान् ॥ गोत्रं शर्माणं प्रेतस्य पितरमावाहयामि। एवमितरयोः। उन्मुच्य जानु अपहता असुरा रक्षाꣳसि वेदिषदः ॥ इति ब्राह्मणस्य पुरतस्तिलान्विकीर्य्यापि उप- स्पृशेत्। ततो यज्ञीयवृक्षचमसेषु पवित्रान्तर्हितेषु सौवर्ण- राजतौदुम्बरखड्गमणिमयानां पात्राणामन्यतमेषु यानि वा विद्यन्ते इति तेष्वर्घ्यं गृह्णाति। औदुम्बरं ताम्रमय- मित्यर्थः। असम्भवे यज्ञीयवृक्षपत्रपुटेषु वा, तदसम्भवे ऽनिषिद्धकदल्यादिपत्रपुटेषु वा। अन्ये प्रसिद्धाः। नात्र मृन्मयं पात्रम्। "तदुक्तं 'कर्मप्रदीपे'—आसुरेण तु पात्रेण यस्तु दद्यात्तिलोदकम्। पितरस्तस्य नाश्नन्ति दशवर्षाणि

पञ्च च ॥ कुलालचक्रनिष्पन्नमातुरं मृन्मयं स्मृतम्।
तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत्" ॥ तत उप-
वीती देवधर्मेण स्वपुरतः प्रागग्रकुशेषूक्तान्यतमपात्रमासा-
द्य, तत्र प्रादेशमात्रं पवित्रं प्रागग्रं कुशांश्चान्तर्द्धाय, तत्राप
आसिञ्चति। शन्नो देवीरिति सिन्धुद्वीपोगायत्र्याप अपा-
१२ ३२३१२३ १२
मासेचने विनियोगः। शन्नो देवीरभिष्टये शन्नो भवन्तु
३१३ २उ ३१२
पीतये। शंय्योरभिस्रवन्तु नः ॥ प्रजापतिर्यजुर्यवो देवता
यवप्रक्षेपणे विनियोगः। यवोऽसि यवयास्मद्द्वेषो यवयारातीः॥
इति यवान् प्रक्षिप्य तूष्णीं चन्दनादिकं प्रक्षिपेत्। प्रा-
चीनावीती पातितवामजानुः तद्दक्षिणतो दक्षिणाग्रान्कु-
शानास्तीर्य्य तत्र प्रेतार्घ्यपात्रं संस्थाप्य तदुपरि दक्षिणा-
ग्रमेकं पवित्रं स्थापयेत्। ततः पृथक्पङ्क्तौ दक्षिणापव-
र्गाणि त्रीणि पात्राणि दक्षिणाग्रकुशेषु प्रेतस्य पित्राद्यर्थं
संस्थाप्य तेषु प्रत्येकं दक्षिणाग्राणि पवित्राणि स्थापयेत्।
तूष्णीं प्रेतपात्रे जलं क्षिपेत्। तिलोसीति तिलानावपेत्।
तत्र मन्त्रे विशेषः। तिलोसि सोमदैवत्यो गोसवो देव-
निर्मितः। प्रत्नमद्भिः प्रक्तः प्रेतमिमल्लोकं प्रीणयाहि नः॥
तूष्णीं चन्दनादिप्रक्षेपः। ततः पित्राद्यर्घ्यपात्रत्रये शन्नो-
देवीरिति पितृतीर्थेनोदकपूरणम्। तिलोसीति तिलप्र-
क्षेपः। प्रतिपात्रं मन्त्रावृत्तिः। तिलोसि सोमदैवत्यो
गोसवो देवनिर्मितः। प्रत्नमद्भिः प्रक्तः स्वधया पितॄनि-
माल्लोकान्प्रीणयाहि नः स्वधानमः॥ तूष्णीं चन्दनादि-

प्रक्षेपः । ततो यज्ञोपवीती देवकरे पवित्रे निधाय, हस्त द्वयेनार्घ्यमादाय, या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्ष उत पार्थवीर्याः । हिरण्यवर्णा यज्ञियास्तान आपः शिवाः शꣳस्योनाः सुहवा भवन्तु ॥ गोत्रस्य प्रेतस्य सपिण्डीकरणश्राद्धे कालकामसञ्ज्ञका विश्वेदेवा एतद्वो-ऽर्घ्यम् । अस्त्वर्घ्यमिति भोक्ता ॥ ततः पवित्रमादायार्घ्य-पात्रे संस्थाप्य, प्राचीनावीती सव्यं जान्वाच्य, प्रेतब्राह्म-णहस्ते शुद्धोदकं निनीय तदर्घ्यपात्रपवित्रं दक्षिणाग्रं तद्धस्ते निधाय, प्रेतार्घ्यमादायार्घ्यसंयोजनार्थं भागत्रयं जलमवशोष्य, चतुर्थभागजलं तद्धस्ते दद्यात् । तद्यथा । या दिव्या आप इतिमन्त्रान्ते अमुकगोत्रामुकप्रेत पितरे-तत्तेऽर्घ्यं तवोपतिष्ठताम् । ततः पवित्रमादाय प्रेतार्घ्यपात्रे स्थापयेत् । ततः प्रेतस्य पित्रादीनां हस्तेषु तत्तदर्घ्यपात्रे किञ्चिज्जलमवशोष्य तत्तदर्घ्यं दद्यात् । तद्यथा । प्राचीना-वीती प्रेतस्य पितृहस्ते दक्षिणाग्राणि पित्रर्घ्यपात्रपवि-त्राणि संस्थाप्य गोत्र पितरे तत्ते ऽर्घ्यं ये चात्र त्वामनु याꣳश्च त्व मनु तस्मै ते स्वधा ॥ इति किञ्चिज्जलमवशो-ष्यार्घ्यं दद्यात् । अस्त्वर्घ्यमिति भोक्ता । पूर्ववच्छुद्धोदक-पवित्रग्रहणस्थापनानि कुर्यात् । अप उपस्पृश्य एवमित-रयोः । तत्तत्पात्रार्घ्यं तत्तन्नामोक्त्वा एतत्ते ऽर्घ्यं ये चात्र त्वामन्विति दद्यात् । तत आद्यार्घ्यसंयोजनं कुर्यात् । तद्यथा । अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिद्वारा वस्वादिलोकप्राप्त्यर्थं गोत्राणां वसुरुद्रादित्यरूपाणां प्रेतस्य पितृपितामहप्रपितामहानाममुकामुकशर्मणामर्घ्यैः सह प्रे-

तार्घ्यस्य संयोजनं करिष्ये। संयोजयेति प्रतिवदेयुः। ततः प्रेतपात्रस्थ पवित्रं गृहीत्वा प्रेतस्य पित्रर्घ्यपात्रे दक्षिणाग्रं संस्थाप्य हस्ताभ्यां प्रेतार्घ्यमादाय ये समाना इतिमन्त्र द्वयस्यान्ते प्रेतार्घ्यप्रथमांशं जलं तत्पित्रर्घ्ये संयोजयेत्। तद्यथा। ये समानाः समनसः पितरो यमराज्ये। तेषां लोकः स्वधानमो यज्ञो देवेषु कल्पताम् ॥ १ ॥ ये समानाः समनसो जीवा जीवेषु मामकाः। तेषाꣳ श्रीर्मयि कल्पतामस्मिँल्लोके शतꣳ समाः ॥ २ ॥ गोत्रस्यामुकप्रेतस्यार्घ्यप्रथमांशो गोत्रस्य शर्मणो वसुरूपस्य प्रेतस्य पितुरर्घ्येण सह संयुज्यताम्। संयुताःस्म इति प्रतिवचनम् पुनस्तत्पवित्रं गृहीत्वा प्रेतस्य पितामहार्घ्ये संस्थाप्य पुनर्येसमाना इतिमन्त्रद्वयान्ते प्रेतार्घ्यद्वितीयांशो गोत्रस्य शर्म्मणो रुद्ररूपस्य पितामहास्यार्घ्येण सह संयुज्यताम्। संयुताःस्म इति प्रतिवचनम्। पुनस्तत्पवित्रं गृहीत्वा प्रेतस्य प्रपितामहार्घ्ये तत्संस्थाप्य पुनर्येसमाना इतिमन्त्रद्वयान्ते प्रेतार्घ्यतृतीयांशो गोत्रस्य शर्मण आदित्यरूपस्यार्घ्येण सह संयुज्यताम्। संयुताःस्म इति प्रतिवचनम्। ततः पवित्रदर्भान् प्रथमं प्रेतपितृपात्रे संस्थाप्य सꣳस्रवांस्तत्र समवनीय स्ववामभागे न्युब्जति। शुन्धन्तां लोकाः पितृषदनाः पितृषदनमसि पितृभ्यः स्थानमसि॥ अर्घ्यपात्रस्थपवित्रकुशान्न्युब्जीकृतपात्रोपरि स्थापयेत्। ततः प्रेतपात्रं प्रेताय पित्रे स्थानमसीति वामभागे न्युब्जीकरोति। ततो यज्ञोपवीतगन्ध-पुष्प-धूप-दीप-वाससां प्रदानम्। तदलाभे यज्ञोपवीतं हिरण्यञ्च दद्यात्। तत्प्रकारो यथा—सम्बोधनान्तं तत्तन्ना-

३२उ १ १ २
चक्रम इति भोक्तुरङ्गुष्ठमन्ने स्थापयेत् । इदं विष्णुर्विच-
३ १- २२ ३२ १ २ ३ २
क्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुले ॥ अथवा
विष्णो हव्यꣳ रक्षस्वेतियजुषाऽङ्गुष्ठमन्ने स्थापयेत् । ततो
वामहस्तेनान्नपात्रमालभ्य दक्षिणहस्तेन कुशोदकमादाय
इदमन्नाद्यातृप्तेर्दत्तं दास्यमानञ्च कालकामसञ्ज्ञकेभ्यो
विश्वेभ्यो देवेभ्यः स्वाहेति देवब्राह्मणपुरतो जलमुत्सृजे-
त् । ततः प्रेतपात्रे तूष्णीं प्रोक्षणं भोक्तुरङ्गुष्ठमन्ने ऽवगा-
ह्येदमन्नाद्यातृप्तेर्दत्तं दास्यमानञ्चामुकगोत्रामुकप्रेत तवो-
पतिष्ठताम् । तत उपवीत्याऽऽचम्य पुनः प्राचीनावीती
पितृधर्मेण सत्यं त्वर्त्तेनेत्यभुक्ष्याप्रादक्षिण्येन पुरतस्ति-
लान्विकीर्य्य सव्योत्तराभ्यां पाणिभ्यां भोजनपात्रमालभ्य
पृथिवी ते पात्रमिति जपित्वेदं विष्णुरिति वैष्णव्या
ऋचा, विष्णो हव्यꣳ रक्षस्वेति यजुषा वा, भोक्तुरङ्गुष्ठ-
मन्ने स्थापयेत् । ततो वामहस्तेनान्नपात्रमालभ्य दक्षिण-
हस्तेन कुशोदकमादायेदमन्नाद्यातृप्तेर्दत्तं दास्यमानं च
गोत्राय प्रेतस्य पित्रे शर्म्मणे स्वधा पितृब्राह्मणपुरतो ज-
लमुत्सृजेत् । अप उपस्पृश्यैवमेवेतरयोः । तत अपोशना-
र्थं पितृपूर्वं क्रमेण जलं दत्वा सव्याहृतिकां गायत्रीं म-
धुमतीमृचं जपित्वा मधुमधुमध्विति च त्रिर्जपित्वा य-
२उ ३३ २२ १२ ३ १
थासुखं जुषध्वमिति वदेत् । ॐ भूर्भुवः स्वः तत्सवितुर्व-
२२ ३ १ २ ३१२ २ ३ १ २ ३ १ २
रेण्यम्भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥
मधुवाता ऋताय ते मधुक्षरन्ति सिन्धवः । माध्वीर्नः स-

न्वोषधीः ॥ मधु नक्तमुतोषसि मधुमत्पार्थिवꣳरजः । मधुद्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॥ मधुमधुमधु इति । एवममृतोपस्तरणमसीति प्रतिब्राह्मणं वदेत् । ततो ब्राह्मणानां युगपत्पूर्वापोशने प्राणाहुतिषु च तत्समकालं तान्मन्त्रान्क्रमेण सकृदेव पठेत् । सर्वत्रामृतोपस्तरणमसि । प्राणाय स्वाहा । व्यानाय स्वाहा । अपानाय स्वाहा । समानाय स्वाहा । उदानाय स्वाहा । ब्रह्मणे स्वाहा ॥ ततो व्याहृतिसामादीन्यभिश्रावयिष्ये इति भोक्तॄन्पृष्ट्वाऽभिश्रावयेति तैरनुज्ञातः कर्त्ता व्याहृतिसामादीन्यभिश्रावयेत् । अशक्तश्चेत्तत्पठनार्थमृत्विजो वृणुयात् । ततः सव्येन सव्याहृतिकां सावित्रीं तस्याश्चैव गायत्र्यं यद्वा ऊविश्पतिरित्यादि पितृसंहितां विहायेदं ह्यन्वोजसेत्यादि माधु-

२उ ३३
च्छन्दसीं संहितामश्नत्सु द्विजेषु जपेत् । यथा ॐ भूर्भुवः
२र १२ ३१ २र ३ १२ ३१२ २ ३ १ २
स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः
३ १ २ १ र १ र र
प्रचोदयात् ॥ १ ॥ ॐ तत्सवितुर्वरेणियोम् । भार्गोदेवस्य
र - २ १र र २ १ - १
धीमाहि२ । धियो यो नः प्रचो१२१२ । हुम् । आ२ । दायो ।
२^ १११ ५ ५ २ १ २ - १२
आ२३४५ ॥ २ ॥ इदाह्मे । हिया३नूओ१जासा२ । सुतꣳ-
१ २ १ २ - १र ७ ३ २
राधा । नाम्पा१ ता२यिपिबातुवस्यागीर्वाणा२३४ः । पिबा-
३ २ १ ^ ३ ५र र ३ ५
३४तुवा२ । स्या२गा२३४औहोवा । वा२३४णाः ॥ १ ॥

५ ५ २ऽ २ ३ ५ १ २ १ २ २ऽ
इद२ंहिया४औहो । नू३ओजा२३४सा । सुत२ंराधा । ना-
^ ३ ५ १ २ ४ ५ १
३२म् । पा२३४ताइ । पिबातुवस्या२३ । ग । वाहायि । वा-
ऽ ५२ ५ ४ ५ ५
२३४णाः । एहिया६हा । हो५इ । डा ॥ २ ॥ इद२ं ह्यनु-
५२ २ १ २ १ २२ २२ २ २ १
६ओजसा । सुत२ंराधा । नाम्पातौ ॥ होवा३हाइ । पिबा-
२ २ १ २२ २ २ २ १ २२ २
तुव । स्यगायिर्व्वाणौ । होवा३हाइ । पिबातुवौ । होवा-
२ २ १ २ १^ ३ ५२ २ २ १ ३ १ १
३हा । स्यगाये३ः । वा२ना२३४औहोवा । घृतश्चुता२३-
१ १ ३२ ४ ५२ २ ऽ ३ ४ ५ ५ २ १ २
४५ः ॥ ३ ॥ त्वामिदा । होयि । हियोनरा६ए । अपाइप्य-
१ १ २ ३ ५ १ २ १२ २२ २ १
न्वा । ज्रायिन् भूर्णा२३४याः ॥ सइन्द्रस्तोमवाहसः । इहा-
२^ ३२ २ ३२ २ २ १ २^ ३२ २ ३२
श्रूधा । औहो३४वाहाइ । उपास्वासा । औहो३४वाहा ।
२ १२ २ १ ५ ५ २
रमागाऽ२३हा३४ऽ३यि । ओ ऽ२३४५इ । डा ॥ ४ ॥ सपू-
२ २ ५ २२ ^ १ २ २ २ २ ऽ
र्व्योमहोना६मे । वेनःक्रतू३भाइरानजे३ । हा३हा । औ३-
२ २ – २ २ २ ऽ १ १ २ २
हो३वा । आइही२ । यस्यद्वारा३मानुः पीता३ । हा३हा ।
ऽ २ २ २ – १ २ २ २ २ ऽ
औ३हो३वा । आइही२ । दाइवेषुधा३ । हा३हाइ । औ३-
२ २ १ – २ १ १ ^ ३ ५२ २ २
हो३वा । आइही२ । यआ२३ । ना२जा२३४औहोवा । मधु-
१ ३ १ १ १ १ ५२४ ३ २^३ ४२ ५ १ २ २
श्चुता२३४५ः ॥ ५ ॥ पुराम्भिन्दुर्य्युवाकवीः । अमितौजा-

२ १र २ १ र २ १ २^ ३ ५
अजाया२३ता । आइन्द्रोविश्वा२ । स्याकर्म्मा२३४णाः ।
१ १२^ ३ ५ ४ ४ ५
धर्त्ता । वाज्रौवा ओ२३४वापुरु५ष्टुताः । होऽ५इ । डा ॥ ६ ॥
४ ४५ ४र ५ ४ ५ ४ १
ओवा । उपप्रक्षमधूमति क्षियन्तः । ओ वा । ओ इ ।
१ र र र२ १ २ १ १ २ १
पुष्येमरइन्धिमहेत आ२३यिन्द्रा । ओ । वाओवा । ओ ।
२र ^ ५ २^ ३ ५
वा हा३१उवा३४ । ऊ३२पा ॥ ७ ॥ हा ओ२३४हाइ ।
३ र २ १ २ १ २^ ३ ४ ५ २ १र
इहा३१ । पवस्वसो । मा३मधु । मा२ऋतावा । अपोवसा ।
२ १ २^ ३र ४ ५ २ १ र २ १ २ ३
नो३अधि । सानोअव्यायि । अवद्रोणा नी३घृत । वन्ति-
४ ५ २^ ३ ५ ३ र २ १ २ १
रोहा । हा ओ२३४हाइ । इहा३१ । मदिन्तमो मत्सरः ।
२ २ ४ २ र १ २र १ २र
आ३४३यि । द्रा३पा५ना६५६ः ॥ ८ ॥ सुरूपकृत्नुमूतयेसु-
१ २र १ २ — १ २ ३ ५ ३ ५
दुघामा । वगो२ । दुहया३१उवा२३ । इ२३४डा । सू२३४वाः ।
२ १ २ १ २ ३ ५
जुहुमा२३सी । द्यविद्यविया३१उवा२३ । ज्यो२३४तीः ॥ ९ ॥
इति माधुच्छन्दसो संहिता ॥ भोजनान्ते प्रेतपात्रे न
विकिरदानम् । प्राचीनावीती प्रेतस्य पितुरुच्छिष्टस्य पुरत-
श्चतुरङ्गुलदेशे दर्भानास्तीर्य्य प्रत्यगपवर्गमपो निनीय तत्र
येत्वग्निदग्धा इतिमन्त्रेण पितृतीर्थेन तिलमिश्रितमन्नं
विकिरेत् । ये त्वग्निदग्धा जीवा ये येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ततः कर्त्ता

पाणिपादौ प्रक्षाल्य द्विराचम्य, हस्तकुशान्त्यक्त्वा ऽन्यकुशान्धृत्वा, द्विजेभ्यः प्रेतपूर्वमुत्तरापोशनं दत्वा, सव्याहृतिकां गायत्रीं मधुमतीश्च त्रिर्जपित्वा ऽऽचान्तेषु प्रेतभिन्नेषु तृप्ताः स्थ इति पृच्छेत्। उपवीती विश्वेदेवास्तृप्तास्स्थ। तृप्तास्स्म इति प्रतिवचनम्। प्राचीनावीती। गोत्र प्रेत स्वदितम्। अस्तु स्वदितम्। प्रेतस्य पितृपितामहप्रपितामहास्तृप्ताः स्थ। तृप्ताः स्म इति प्रत्युक्ते प्रेतभिन्नविप्रेष्वन्नशेषाभ्यनुज्ञा। अन्नशेषैः किं? क्रियतामिति पृष्ट्वा, इष्टैस्सह भुज्यतामित्यनुज्ञातो ब्राह्मणानां हस्तक्षालनात्पूर्वमुच्छिष्टसन्निधौ पिण्डान्दद्यात्। प्रेतपाकान्नेन प्रेतपिण्डः। प्राचीनावीती वाग्यतो यजमान उच्छिष्टपात्रस्य बाहुमात्रप्रदेशे चतुरस्रं मण्डलं विधाय, गोमयेनोपलिप्य, तत्पश्चिमभागे प्रेतस्य पित्राद्यर्थं तथैव मण्डलं विधाय, तत्रदक्षिणाप्रवणां सैकतेनोभयत्र वेदिकां कृत्वा ऽभ्युक्ष्य, दक्षिणाग्रान्कुशानास्तीर्य्य, प्रेतपिण्डे नोल्लेखनं सव्येन पिञ्जूलीं गृहीत्वा, सव्याद्दक्षिणेन पिञ्जूलीं गृहीत्वा पिञ्जूल्यग्रेणास्तृतकुशोपर्यपहता इतिमन्त्रेण दक्षिणाग्रां रेखामुल्लिखेत्। अस्य प्रजापतिर्ऋषिर्यजुः पितरो देवता लेखोल्लेखने विनियोगः। अपहता असुरा रक्षांꣳसि वेदिषदः॥ ततः पिञ्जूलीं त्यक्त्वाऽप उपस्पृशेत्। प्रेतपिण्डस्थले नावाहनम्। एत पितर इतिमन्त्रेण प्रेतपितॄनावाहयेत्। ततः प्रेतपिण्डस्थाने ऽमुकगोत्र पितः प्रेत पिण्डस्थाने ऽवनेनिक्ष्व। ततो द्विगुणकुशजलमादाय, प्राचीनावीती वामजानु भूमौ निधाय, पितृतीर्थेनास्तृतकुशमूलेषु अमुकगोत्र

पितरमुकशर्मन्नवनेनिक्ष्व ये चात्र त्वामनुयांश्च त्वमनु तस्मै ते स्वधा ॥ अप उपस्पृश्य पुनः कुशमध्येषु, अमुकगोत्र प्रेतस्य पितामहामुकशर्म्मन्नवनेनिक्ष्व ये चात्र त्वेत्यादि । पुनः कुशाग्रेषु, अमुकगोत्र प्रेतस्य प्रपितामहामुकशर्म्मन्नवनेनिक्ष्व ये चात्र त्वेत्यादिप्रत्यवनेजनमप उपस्पृशेत् । प्रेतपाकान्नेन पिण्डं कृत्वा प्रेतपिण्डावनेजनस्थाने ऽमुकगोत्रामुकप्रेत पितरेष ते पिण्ड उपतिष्ठताम् । तत आचम्य प्रेतस्य पित्रादीनामवनेजनक्रमेण पिण्डान् दद्यात् । पित्रादिपाकशेषादल्पमल्पं गृहीत्वा, तत्राज्यमवनीय हुतशेषेण मिश्रीकृत्य, तिलान् संयोज्य, बिल्वमात्रान्वीन् पिण्डान् कृत्वा, दक्षिणहस्तेन गृहीत्वा, सव्येनान्वारभ्य, पितृतीर्थेनामुकगोत्र प्रेतस्य पितरमुकशर्मन्नेष ते पिण्डः ये चात्र त्वामनुयांश्च त्वमनु तस्मै ते स्वधा । अप उपस्पृश्यैवं पितामहप्रपितामहयोः पिण्डौ तत्तन्नामोक्त्वा क्रमेण स्थापयेत् । ततः प्रेतपिण्डे प्रत्यवनेजनादि, न पित्रादिपिण्डेषु प्रत्यवनेजनम् । प्रेतपिण्डपात्रक्षालनजलेनप्रत्यवनेजनाद्यभिरम्यतामितिप्रेतार्थनिमन्त्रितब्राह्मणविसर्गान्तमाद्यमासिकैकोद्दिष्टश्राद्धवत्कुर्य्यात् । ततः पिण्डसंयोजनम् । आचम्य गोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिपूर्वकं वस्वादिपितृत्वप्राप्त्यर्थं गोत्राणां वसुरुद्रादित्यस्वरूपाणां प्रेतस्य पितृपितामहप्रपितामहानाममुकामुकशर्मणां पिण्डैः सह प्रेतपिण्डस्य संयोजनं करिष्ये । कुरुष्वेत्यनुज्ञातः सुवर्णादिशलाकया कुशेन च प्रेतपिण्डस्य त्रिभागं कृत्वा, ये समाना इतिमन्त्रद्वयं पठित्वा,

अमुकगोत्रस्यामुकप्रेतस्य पिण्डस्य प्रथमभागो गोत्रस्य शर्म्मणो वसुरूपस्य प्रेतस्य पितुः पिण्डेन सह संयुज्यताम् । संयुताः स्म इति प्रतिवचनम् । दधिमधुभ्यां मिश्रीकुर्य्यात् । ततः प्रेतपिण्डस्य द्वितीयभागो गोत्रस्य शर्मणो रुद्ररूपस्य प्रेतस्य पितामहस्य पिण्डेन सह संयुज्यताम् । संयुताः स्म इति प्रतिवचनम् । मिश्रणं पूर्ववत् । पुनः प्रेतपिण्डस्य तृतीयभागो गोत्रस्य शर्मण आदित्यरूपस्य प्रेतस्य प्रपितामहस्य पिण्डेन सह संयुज्यताम् । संयुताः स्म इतिप्रतिवचनम् । मिश्रणं पूर्ववत् । ततः पिण्डपात्रक्षालनजलेन प्रत्यवनेजनं कृत्वा पिण्डपात्रमधोमुखं स्थापयेत् ततोऽत्र पितरो मादयध्वमिति जपति । अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुः पितरो देवता जपे विनियोगः । अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ॥ अप्रादक्षिण्येन पर्य्यावृत्योदङ्मुखो दक्षिणाभिमुखो वा ऽनुच्छ्वसन्नमीमदन्त पितर इति जपेत् । अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुः पितरो देवता जपे विनियोगः । अमीमदन्त पितरो यथाभागमावृषाइषत ॥ ततः कृताञ्जलिर्नमो वः पितरः पितर इति जपति । अस्य प्रजापतिर्ऋषिरुष्णिक्छन्दः पितरो देवता जपे विनियोगः । नमो वः पितरः पितरो नमो वः ॥ ततः पत्नीमवेक्षते । अस्य मन्त्रस्य प्रजापतिर्ऋषिर्यजुः पितरो देवता पिण्डावेक्षणे विनियोगः । सदो वः पितरो देष्म ॥ ततः सव्येन हस्तेन पूर्वासादितसूत्रं गृहीत्वा दक्षिणेनादाय सव्येनान्वारभ्य पितृतीर्थेन प्रथमपिण्डे निदध्यात् । अ-

मुकगोत्र पितरमुकशर्मन्नेतत्ते वासः ये चात्र त्वमनु यां-श्च त्वमनु तस्मै ते स्वधा ॥ तत अप उपस्पृश्य पितामहनामयुक्तमन्त्रेण पितामहपिण्डे निदध्यात् । तथैव प्रपितामहपिण्डे सूत्रं निदध्यात् । अत्रापि दक्षिणहस्तेन सूत्रनिधानं वामेनान्वारम्भः । यथाचारं गन्ध-पुष्प-धूप-दीप-नैवेद्यादिभिः पिण्डपूजनम् । ततो भोक्तृभ्यो मुख-हस्तप्रक्षालनाद्यर्थमुदकं दत्वा स्वयं हस्तौ प्रक्षाल्याचामेत् । आचान्तेषु भोक्तृषु सव्येन सुसम्प्रोक्षितमस्त्विति द्विजाग्रभूमिं जलेनासिञ्चेत् । अस्त्वितिप्रतिवचनम् । शिवा आपः सन्त्विति द्विजहस्तेषु जलं प्रयच्छेत् । सौमनस्यमस्त्विति भोक्तृहस्तेषु कुसुमानि । अक्षतञ्चारिष्टं चास्त्वित्यक्षतान् दद्यात् । अथ प्राचीनावीती सव्यं जान्वाच्य कुशोदकं गृहीत्वा अमुकगोत्रस्य पितुरमुकशर्मणो दत्तं सपिण्डीकरणश्राद्धमक्षय्यमस्त्विति पितृब्राह्मणहस्ते जलं दद्यात् । अस्त्वक्षय्यमिति भोक्तृप्रतिवचनम् । अप उपस्पृश्य, एवं पितामहप्रपितामहयोः । तत अघोराः पितरसन्त्विति कर्त्ता वदेत् । सन्त्वघोराः पितर इति प्रतिवदेयुर्भोक्तारः । गोत्रं नो वर्द्धतामिति कर्त्ता । वर्द्धतामिति भोक्तारः । ततो न्युब्जीकृतपित्रर्घ्यपात्रे स्थापितान् स्वधानिनयनीयान् सपवित्रान् कुशान् सव्येनाप्रादक्षिण्येनादाय, पित्रादिपिण्डोपरिक्रमेणास्तीर्य्य, स्वधां वाचयिष्य इति पृच्छति । वाच्यतामिति भोक्तारः । ततो गोत्रेभ्यः पितृभ्यः शर्मभ्यः स्वधोच्यतामिति कर्त्ता ।

अस्तु स्वधेति भोक्ता प्रतिवदेत्। पितामहेभ्यः प्रपितामहेभ्य इति विशेषः। ततो न्युब्जीकृतपित्रर्घ्यपात्रमुत्तानं कृत्वा तेनोदकमादाय पित्रादिपिण्डत्रयोपरि धारां दद्यादूर्जं वहन्तीरिति। ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतꣲ स्वधास्थ तर्प्पयत मे पितॄन्॥ ततो देवहस्ते जलं दत्वा विश्वेदेवाः प्रीयन्तामिति वाचयेत्। प्रीयन्तां विश्वेदेवा इति प्रतिवचनम्। ततः पिण्डान् भोजनपात्राणि च स्वस्थानाच्चालयेत्। ततो देवपूर्वं यथाशक्ति दक्षिणां दद्यात्। विश्वेदेवा इयं वो दक्षिणा। पितरियं ते दक्षिणा। एवं पितामहप्रपितामहयोः। कर्त्ता भोक्तॄन्। प्रति प्रार्थयेत्। दातारो नोऽभिवर्द्धन्तां वेदाः संततिरेव च। श्रद्धा च नोमाव्यगमद्बहुदेयं च नोऽस्त्विति॥ ततो भोक्तारः। दातारो वोऽभिवर्द्धन्तां वेदाः संततिरेव च। श्रद्धा च वो मा व्यगमद्बहुदेयं च वोऽस्त्विति प्रतिवदेयुः॥ ततः कर्त्ता। अन्नञ्च नो बहुभवेदतिथींश्च लभेमहि। याचितारश्च नः सन्तु मा च याचिष्म कंचन॥ ततो भोक्तारः। अन्नं च वो बहुभवेदतिथींश्च लभध्वं। याचितारश्च वः संतु मा च याचिढ्वं कंचन॥ एता एवाशिषस्सन्तु इति कर्त्ता। एताः सन्त्वाशिष इति भोक्तारः। ततः स्वस्ति भवन्तो ब्रुवन्तु। ॐ स्वस्तीति भोक्तारः। ततः कर्त्ता आशिषः प्रतिगृह्य पितृपूर्वं वाजेवाज इति विसर्जयेत्। पितृपङ्क्तिमुख्यस्य ब्राह्मणस्याङ्गुष्ठमपसव्येन गृहीत्वा, वाजेवाजेवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता

यात पथिभिर्देवयानैः ॥ इत्येतया पितृपूर्वं पितॄन् विसृज्य, सव्येन विश्वान् देवान् विसृज्य सर्वानुत्थापयेत् । ततः सर्वे देवविप्राः पादप्रक्षालनदेशे प्राङ्मुखाः पित्रादयश्चोदङ्मुखास्तिष्ठेयुः । ततः कर्त्ता जलपात्रं गृहीत्वा ब्राह्मणानां परितो जलधारां प्रादक्षिण्येन दद्यात् आमावाजस्येति । आमा वाजस्य प्रसवो जगम्यादेवे द्यावापृथिवी विश्वरूपे । आमागन्तां पितरा मातरा चामासोमो अमृतत्वेन गम्यात् ॥ अथ सीमान्तमनुव्रज्य प्रदक्षिणं कृत्वा, ब्राह्मणानभिवाद्य, वामदेव्यंगीत्वा, गृहं प्रविशेत् । वामदे-

३ २ ४ २ ४२ ५ १
व्यसामप्रकाशः । काऽ५या । नश्चा३इत्रा३आभुवात् । ऊ ।
२ २ १२ २ १ २ २ २ १ २^ ३ २
तीसदावृधःस । खा । औ३होहाइ । कया२३शचाइ । छयौ-
२ १ – १ २ ३ २ ४
हो३ । हुम्मा२ । वा२तौ३ऽ५हाइ ॥१॥ काऽ५स्त्वा । सत्यो३-
२ ४ ५ १ २२ १ २ १ २ २ २
मा३दानाम् । मा । हिष्ठोमात्सादन्ध । सा । औ३होहाइ ।
१ २^ ३ २ २ १ – १ २
दृढा२३चिदा । रुजौहो३ । हुम्मा२ । वाऽ२सो३ऽ५हायि ॥ २ ॥
३ २ ४ २ ४ ५ १ २२ १ २२
आऽ५भी । षुणा३ःसा३खीनाम् । आ । विताजरायितॄ ।
१ १ २ २ १ २^ ३ २ २
णाम् । औ२३होहायि । शता२३म्भवा । सियौहो३ ।
१ – १ २
हुम्मा२ । ताऽ२यो३ऽ५हायि ॥ ३ ॥

अथ मातुः सपिण्डीकरणे मिताक्षरायाम् । "अपुत्रायां प्रमीतायां भर्त्ता स्वमात्रैव सपिण्डीं कुर्यात् । अन्वारोहे तु पुत्रः स्वपित्रैव मातुः सापिण्ड्यं कुर्य्यात् । आसु-

रादिविवाहोत्पन्नः पुत्रिकासुतश्च मातामहेनैव कुर्य्यात् । ब्राह्मादिविवाहोत्पन्नः पित्रा, मातामहेन, पितामह्या वा, विकल्पेन कुर्य्यात् । अत्रापि नियतो वंशसमाचारस्तदानीं तथैव कुर्य्यात्" । कर्मप्रदीपे तु–"मातुः सपिण्डीकरणं पितामह्या सहोदितम् । यथोक्तेनैव कल्पेन पुत्रिकाया न चेत्सुतः" ॥ इति सपिण्डीकरणप्रयोगः ॥

अथस्मार्त्ताग्निमतो दाहविधिरुच्यते । अथ मुमूर्षुं स्वयं होमासमर्थं पुत्रादिरग्निसमीपे शाययेत् । यदि शुक्लपक्षे हुतायां सायमाहुत्यां मरणशङ्का स्यात्, तदैवागामिप्रातर्होमं कुर्यात् । यदि कृष्णपक्षे सायमाहुतेः परं मरणशङ्का स्यात्तदैव दर्शपर्य्यन्तमवशिष्टसायमाहुतीः प्रातराहुतीश्च परिगणय्य पक्षहोमवत्सायंप्रातराहुतीस्तन्त्रेण सायमेव कुर्य्यात् । पिण्डपितृयज्ञं विहाय दर्शस्थालीपाकमपि तदैव कुर्य्यात् । पुनर्जीवति चेद्दर्शपिण्डपितृयज्ञस्यानुष्ठानं, न होमस्थालीपाकयोः । शुक्लपक्षे दिवामरणे सायंहोमो न । कृष्णपक्षे दिवामरणेऽवशिष्टतिथिसायंप्रातराहुतिदर्शस्थालीपाकानुष्ठानं भवत्येव । ततः कर्त्ता प्राक् स्मृतिवियोगान्मणिकोदकेनासन्नमरणं स्नापयित्वा, शुद्धे वाससी परिधाप्य, दक्षिणाग्रदर्भेषु तिलान्विकीर्य्य, दक्षिणाशिरसं निवेशयेत् । गृह्याग्निपरिचर्य्यार्थमग्निशालायां यस्मिन्भाण्ड उदकं पूर्णं स मणिकः । ततो वैतरणीदानादिकं कुर्य्यात् । ततो मरणानन्तरं घृताभ्यञ्जनादि चितेरुपरि स्थापनान्तं कर्म निरग्निकवत्कुर्य्यात् । ततो गृह्याग्न्युपयुक्तपा-

त्राणां प्रतिपत्तिः कर्मप्रदीपे। "आज्यपूर्णां दक्षिणाग्रां स्रुचं मुखे स्थापयेत्। तथाग्रमाज्यपूर्णं स्रुवं नासिकायाम्। पादयोः प्रागग्रामधरारणिं। तथाग्रामुत्तरारणिमुरसि। सव्यपार्श्वे दक्षिणाग्रं शूर्पम्। दक्षिणपार्श्वे दक्षिणाग्रं चमसम्। ऊरुद्वयमध्ये उलूखलं मुसलमधोमुखं, तत्रैव चत्रमोविलीकं च स्थापयेत्। लोहमयादीनि पात्राणि ब्राह्मणाय दद्यादप्सु वा प्रक्षिपेत्। ततो दाहविधिस्तत्र मन्त्रः। "अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः। असौ स्वर्गाय लोकाय स्वाहा"॥ इति कर्मप्रदीपोक्तमन्त्रेण गृह्याग्निं दद्यात्। अत ऊर्द्ध्वं सपिण्डीकरणान्तं सर्वं समानं निरग्निकवत्॥

अथ श्रौताग्निमतो दाहविधिरुच्यते। शुक्लपक्षे सायमग्निहोत्रात्परं मरणशङ्का चेत्तदैव दक्षिणाग्निमाहवनीयञ्च विहृत्य तदैवागामि प्रातरग्निहोत्रं कुर्यात्। सायमग्निहोत्रात्पूर्वं चेत्तदा सायमग्निहोत्रमागामिप्रातरग्निहोत्रं च तन्त्रेण कुर्य्यात्। उन्नयनात्पूर्वं होमद्रव्योत्पत्तेः परं यजमानस्य प्राणवियोगे होमद्रव्यं गार्हपत्ये प्रक्षिपेत्। उन्नयनात्परं होमादर्वाक् मृते होमद्रव्यमाहवनीये प्रक्षिपेत्। प्रातःकालपर्य्यन्तं जीवति चेन्न पुनरग्निहोत्रम्। शुक्लपक्षे ऽवशिष्टतिथ्यग्निहोत्रं पूर्णमासेष्टिश्च न भवति। कृष्णपक्षे निशायां प्राणवियोगसंशये पूर्ववत्सायम्प्रातरग्निहोत्रञ्च हुत्वा, दर्शपर्य्यन्तावशिष्टतिथिपरिगणनया सायम्प्रातर्होमानामुन्नयनं कृत्वा, पक्षहोमविधिना तन्त्रेण सायम्प्रातरग्निहोत्राऽनुष्ठानं कुर्य्यात्। पिण्डपितृयज्ञं विना

सम्पूर्णां दर्शेष्टिमपि कुर्य्यात्। दर्शेष्टिकरणासम्भवे, श्रौतेन विधिनाऽऽज्यं संस्कृत्य, चतुर्गृहीतेनाज्येन दर्शदेवतापुरोनुवाक्यामनूच्य, तद्देवतायाज्ययाऽऽज्येन प्रधानदेवतां यजेत्। पुनश्चतुर्गृहीतेनाज्येन देवतान्तरं यजेत्। तत्राप्यसम्भवे तत्तद्देवतानाम्ना चतुर्थ्यन्तेनाज्येन पूर्णाहुतिं जुहुयात्। यथाऽसोमयाजिनः। अग्नये स्वाहा। इन्द्राग्निभ्यां स्वाहा॥ सोमयाजिनस्तु। अग्नये स्वाहा। इन्द्राय स्वाहा। इन्द्रस्थाने महेन्द्रो वा॥ दर्शपर्य्यन्तं जीवति चेन्नाग्निहोत्रं न दर्शेष्टिः। किन्तु पिण्डपितृयज्ञमात्रम्। सकलेष्टिपक्षे हविषामुत्पत्तेः परं हविरासादानात्पूर्वं मृते, हविषां गार्हपत्ये प्रक्षेपः। हविरासादनादूर्ध्वं होमात्पूर्वं मृते, हविषामाहवनीये प्रक्षेपः। इष्टिमध्ये यस्मिन् कर्मणि मृतिः तत्कर्मान्तं कृत्वा नोर्द्ध्वं कर्म कुर्य्यात्। आसन्नप्राणवियोगं ज्ञात्वा, वेदिकां गोमयेनोपलिप्य, तत्र कुशादीनास्तीर्य्य, तत्र दक्षिणाशिरसं यजमानमुपवेश्य, वैतरणीगोदानादिकं कारयित्वा, मृतस्याभ्यञ्जनाद्यलंकरणान्तं कर्म निरग्निकवत्कुर्य्यात्। नात्र हिरण्यशकलप्रक्षेपः। ततः पुत्रादिर्गार्हपत्यादग्निमुद्धृत्याहवनीयं दक्षिणाग्निं सभ्यावसथ्यौ च विहरेत्। ततोगार्हपत्यादिनामलेखनेन चिन्हितेषु नवीनमृत्पात्रेषु गार्हपत्यमाहवनीयं दक्षिणाग्निं सभ्यावसथ्यौ गृह्याग्निं च निधाय यज्ञपात्राणि पृषदाज्यं दर्भान् तिलान् घृतं सप्तहिरण्यशकलानि पिण्डद्रव्याणि च गृहीत्वाऽग्निपूर्वाः शवमध्याः स्मशानं गच्छेयुः। अर्द्धमार्गे स्मशाने

पिण्डदानं निरग्निकवत् । ततः स्मशाने कुत्रचिच्छुद्धदेशे गार्हपत्यस्थानं परिकल्प्य तस्मादष्टसु प्रक्रमेष्वाहवनीयस्थानम् । विदतीयदेशे दक्षिणस्यां दिशि दक्षिणाग्न्यायतनम् । आहवनीयपार्श्वयोः सभ्यावसथ्यस्थाने परिकल्प्य गार्हपत्याहवनीययोर्मध्ये दक्षिणाप्रवणां चितिं पूर्ववत्कुर्यात् । ततो गार्हपत्याद्यायतनेषु सकृत्सकृत्पञ्चभूसंस्कारान् कृत्वा तेष्वग्नीन्यथाक्रमं स्थापयेत् । ततश्चितौ दक्षिणाशिरसं प्रेतं स्थापयेत् । ततः प्रेतस्य मुखादिषु स्मार्त्ताग्निपात्राणि साग्निकवत्संस्थाप्य यज्ञियपात्राणि 'लाट्यायन'-सूत्रोक्तविधिना स्थापयेत् । सूत्रम् । "शिरसि कपालानि, इडां दक्षिणाग्रां च, ललाटे प्राशित्रहरणम्, दक्षिणाग्रमग्निहोत्रस्रुवं दक्षिणनासायाम्, तथाग्रमैष्टिकस्रुवं वामनासिकायाम् । ततः सप्तहिरण्यशकलान्यस्मिन्काले मुखादिच्छिद्रेषु प्रक्षिपेत् । यथा—मुखे प्रथमम्, ततो दक्षिणनासिकायाम्, ततो वामनासिकायाम्, ततो दक्षिणनेत्रे, ततो वामनेत्रे, ततो दक्षिणकर्णे, ततो वामकर्णे, तत अग्निहोत्रहवणीं तिरश्चीं प्रागग्रां मुखे, दक्षिणपाणौ जुहूं दक्षिणाग्रां, सव्ये पाणावुपभृतं दक्षिणाग्राम्, उरसि ध्रुवां दक्षिणाग्राम्, उदरे पात्रीम्, उपस्थे कृष्णाजिनम्, सक्थ्नोर्मध्ये शम्यां दृषदुपले च, यान्यनिर्दिष्टस्थानानि तान्यत्रैव स्थापनीयानि" । तानि यथा—अरणिद्वयं चत्रौविली प्रणीता दोहनपात्रश्रृतावदानान्तर्द्धानपात्रपूर्णपात्रयोक्त्रादीन्येतान्यपि दक्षिणाग्राणि । चत्रं नाम मन्थनदण्डः । औविली नाम मन्थदण्डस्योपरिभागे यो लोहशङ्कुस्तदु-

परि स्थापनकाष्ठम् । दक्षिणकटिसन्निकृष्टजघनप्रदेश ऊर्द्ध्वमुलूखलं, तत्रैव मुसलम् । पादयोः शूर्प्पं दक्षिणाग्रं, पूर्वोक्तानि सर्वाण्यपि यज्ञपात्राणि पृषदाज्यपूरितान्युत्तानानि स्थापयेत् । "दधिमिश्रितं घृतं पृषदाज्यम्" । ततोऽस्मिन्काले सक्थ्नोर्मध्ये सभ्यावसथ्यौ स्थापनीयौ । गृह्याग्निरपि । ततोऽग्निभ्य उलपराजिनामकबहुकुशास्तरणं कुर्यात् । यथा यजमानस्य शरीरे सर्वेऽग्नयः सङ्गता भवेयुः । तदुक्तं लाट्यायनेन । "सर्वेभ्योऽग्निभ्य उलपराजीन् स्तृणुयुः यथाऽस्मिन्नग्नयः समवेष्यन्तीति" ॥ ततो गार्हपत्यादीनाम्मध्ये यस्य प्रथमतो ज्वलनं तदनुसारेण यजमानस्य फलविशेषमाह । "आहवनीयाच्चेत्प्रथममियाद्ब्रह्मलोकमेष्यतीति विद्यात्, गार्हपत्याद्देवलोकं, दक्षिणाग्नेः पितृलोकम्" । सूत्रं । "क्लृप्तेषु यज्ञपात्रेषु त्रिश्छन्दोगः परिगायेत् नाकेसुपर्णमिति, धूम उदिते त्वेषस्ते धूम ऋणवतीति, प्रज्वलिते ऽग्ने मृड महाँ२असि, इत्येतयोरन्यतरेण । अत्रायं भावः । यज्ञपात्रस्थापनानन्तरं नाकेसुपर्णमितिसाम्नस्त्रिर्गानं प्राचीनावीती तिष्ठन्कुर्यात् कर्त्ताऽन्यो वा । धूमे जाते, त्वेषस्तेधूम ऋणवतीत्यस्य साम्नस्त्रिर्गानम् । अग्ने मृड महाँ२असीतिसामद्वयमध्ये ऽन्यतरस्य त्रिर्गानम् । सामप्रकाशो यथा ।

१ - १    ३ २२<br>
आ२याम् । अयायम् । औ३हो३यि । आ२यि । उ२ । नाकेसुपार्णमुपयात्पतन्ताम् ।

१   २ ऽ २   -   -   १२ २   ३ २   १   ३ २ १   २ ऽ २   १ -   १ -   १ - १<br>
पतन्तम् । औ३हो३यि आ२यि । ऊ२ । आ२याम् ।

अयायम्। औ३हो३यि आ२यि। ऊ२। हृदावेनान्तो अभ्य-
चाक्षतत्वा। क्षतत्वौ३। हो३यि। आ२यि। ऊ२। आ२-
याम्। अयायम्। औ३हो३यि। आ२यि। ऊ२। हिरण्य-
पाक्षंवरुणास्यदूताम्। स्यदूतम्। औ३हो३यि। आ२यि।
ऊ२। आ२याम्। अयायम्। औ३हो३यि। आ२यि। ऊ२।
यमस्ययोनौशकुनाम् भुरण्यूम्। भुरण्युं। औ३हो३यि।
आ२यि ऊ२। आ२याम्। अयायम्। औ३हो३यि। आ२-
यि। ऊ२। वाहा३१उवा२३। ए३। दिवम्। २। ए३।
दिवा३४५म्॥ १॥ त्वेषास्ते२३धूमऋण्वतिहाउ। दिवि-
संच्छूका३आताता३ः। सूरोनहीहाउ। द्युतातूवा३म्।
कृपापवाहाउ। करोचा२३सा३४३यि। ऊ२३४५ई। डा।
गौ॥ २॥ अग्नायिमृडा२। महा१आ२३४सी। अयआ-
हा२यि। वयुजा२३४नाम्। इयेथवा२३। हिरा३सा५दा-
६५६म्॥ ३॥ अग्नेमृडमहा१असि। ओहा३ओहा। अ-
यआदेवयुञ्जनम्। ओहा३ओहा। इयेथा२३व। हिरा३सा-

५।८।६५६म् ॥ ४ ॥ ततो गार्हपत्ये आज्यस्थालीमधिश्रि-
त्याज्यं विलाप्योद्वास्य पवित्राभ्यामुत्पूयावेक्षते । ततः प्रे-
तोपरि पूर्वस्थापितामग्निहोत्रहवणीमग्निहोत्रस्रुवञ्च गृही-
त्वा संमृज्य, स्रुवेणाग्निहोत्रहवण्यां सकृदाज्यं गृहीत्वा,
प्राचीनावीती दक्षिणाभिमुखः सव्यं जान्वाच्य प्रज्वलि-
तेऽग्नौ प्रेतमुखे समिधं प्रक्षिप्यास्मात्वमधीतिमन्त्रेणा-
ज्यं जुहुयात् । मन्त्रे ऽसावित्यस्य स्थाने प्रेतस्य प्रथमान्तं
नामोच्चारणीयम् । मन्त्रः—अस्मात्त्वमधिजातोऽसि त्वदयं
जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहा ॥ ततोऽग्नि-
होत्रहवणीं प्रागग्रां तिरश्चीं पृषदाज्ययुक्तां मुखे विन्यस्य
दक्षिणनासायामग्निहोत्रस्रुवं पृषदाज्ययुक्तं दक्षिणाग्रं वि-
न्यसेत् । ततो धूमे उदिते उक्तसामगानम् । प्रज्वलिते
ऽप्युक्तसामगानम् । ततः सप्तकाष्ठग्रहणं सप्तप्रदक्षिणा-
दिकं च निरग्निकवत्कुर्यात् । इति श्रौताग्निमतो गोभि-
लसूत्रिणो दाहविधिः ॥

अथाहिताग्निविषये ऽग्निनिर्णयः । यदि यजमानप-
त्न्योर्मध्ये यजमानः पूर्वं प्रमीयेत तं सर्वैरग्निभिः संस्कु-
र्य्यात् । पत्नीं निर्मन्थ्येन । यदि पत्नी पूर्वं म्रियेत्, यजमानः
पुनर्विवाहेच्छुश्चेत्पत्नीमग्निभिः पात्रैश्च दाहयित्वा शीघ्र-
मन्यामुद्वाह्याग्निमादध्यात् । केनापि निमित्तेन विवाहा-
सम्भवे पत्नीं निर्मन्थ्येन दाहयित्वा यावज्जीवमग्निहोत्रं
जुहुयात् । अन्यान्यपि दर्शपूर्णमासादीनि नित्यानि क-
र्म्माणि तन्निमित्तप्रायश्चित्तानि च कुर्य्यात् । यदि पत्नी-

मग्निभिः पात्रैश्च दाहयित्वा स्वयं निरग्निको भवेत्तर्हि प्रायश्चिती स्यात् । स्पष्टोऽयमर्थः कर्मप्रदीपे–"दाहयित्वाऽग्निभिर्भार्यां सदृशीं पूर्वसंस्थिताम् । पात्रैश्चाथाग्निमादध्यात्कृतदारोऽविलंबितः ॥ मृतायामपि भार्यायां वैदिकाग्नीन्नहि त्यजेत् । उपाधिनाऽपि तत्कर्म यावज्जीवं समाचरेत्" ॥ गृह्याग्निमतः पत्नीदाहे अस्मात्त्वमधिजातेति न मन्त्रपाठो ऽन्यत्सर्वं साग्निकवत्कुर्य्यात् ॥२॥ "श्रौताग्निमतः पत्नीदाहे ऊहरहितेनाऽस्मात्त्वमधिजात इति मन्त्रेण दाह" इति कर्कोपाध्यायः ॥ इत्याहिताग्निविषयेऽग्निनिर्णयः ।

अथ त्रिरात्राशौचवतः कृत्यविधिः । प्रथमदिने पिण्डत्रयं, द्वितीये चतुष्टयं, तृतीये पिण्डत्रयम् । अथवा प्रथमे एकः, द्वितीये चत्वारः, तृतीये पञ्च, पिण्डा देयाः । सद्यः शौचे एकस्मिन्दिने दशपिण्डा देयाः । पक्वान्नासम्भवे शालियवपिष्टान्यतरेण पिण्डा देयाः ॥

अथ रजस्वलाया मरणे दाहविधिरुच्यते । "रजस्वलायाः प्रेतायास्संस्कारादीनि नाचरेत् । ऊर्ध्वं त्रिरात्रात्स्नातां तां शवधर्म्मेण दाहयेत्" ॥ अतो रजस्वलायाः प्रेतायास्त्र्यहमध्ये मरणानन्तरं रजोरूपं मलं प्रक्षाल्य, स्नापयित्वा, काष्ठवद्दग्ध्वा त्र्यहोर्द्ध्वमस्थीनि विधिना दहेत् । सङ्कटे तु त्र्यहमध्ये मरणानन्तरं प्रायश्चित्तपूर्वकं विधिवद्दहनमाह मदनरत्ने स्मृत्यन्तरे च । "उदक्या सूतिका वापि मृता स्याद्यदि तां तदा । अशौचे शमतिक्रान्ते दाहयेदन्तरा यदि ॥ उद्धृतेन तु तोयेन स्नापयित्वा तु मन्त्र-

तः । आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाश्चतसृभिः ॥ पव-
मानानुवाकेन यदन्तीति च सप्तभिः ॥ ततो यज्ञपवित्रेण
गोमूत्रेणाथ वा द्विजाः । स्नापयित्वाऽन्यवसनेनाच्छाद्य
शवधर्मतः । दाहादिकं ततः कुर्य्यात्प्रजापतिवन्तो यथा ॥
गृह्यकारिकायाम् । "अन्तरिक्षमृता ये च वन्हावप्सुप्रमा-
दतः । उदक्या सूतिका नारी चरेच्चान्द्रायणत्रयम्" ॥
मिताक्षरायां तु,-"पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां र-
जस्वलाम् । वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम्" ॥
देशकालौ सङ्कीर्त्त्यामुकगोत्रायाः प्रेताया रजस्वलाया म-
रणदोषपरिहारार्थमौर्ध्वदैहिककर्मयोग्यतासिद्ध्यर्थं चान्द्रा-
यणत्रयप्रतिनिधिप्रायश्चित्तपूर्वकमुद्धृतोदकेनाष्टोत्तरशत-
संख्याकस्नानानि कारयिष्ये इति सङ्कल्प्य, चान्द्रायणत्र-
यप्रतिनिधिगोदानानि कृत्वा, तामुद्धृतोदकेन पञ्चगव्येन
शुद्धोदकेन चाष्टोत्तरशतकृत्वः स्नापयित्वा, मन्त्रैः स्नापये-
त् । छन्दोगानां तु-उपास्मै गायतानर इत्यादिभिः पाव-
मानीभिः त्वमूष्वित्यादिऋग्द्वयेनापोहिष्ठेत्यादिभिस्तिसृ-
भिः कयानश्चित्र इत्यादिभिस्तिसृभिश्च स्नापयित्वा, पू-
र्वधृतवस्त्रं परित्याज्यान्यवाससा परिच्छाद्य, विधिना द-
हेत् । मन्त्रा यथा । इति रजस्वलामरणे दाहविधिः ॥

अथ सूतिकामरणे दाहविधिः ॥ रजस्वलावत्सूति-
काया अपि मरणानन्तरं मलं प्रक्षाल्य, काष्ठवद्दग्ध्वा
ऽस्थीनि विधिवद्दहेत् । अन्ये तु विशेषमाहुः । तत्र बोधा-
यनः-"उदक्यासूतिकामृत्यौ चरेच्चान्द्रायणत्रयम्" ॥

मिताक्षरायां तु–"सूतिकायाम्मृतायां तु कथं कुर्वन्ति याज्ञिकाः। कुम्भे सलिलमादाय पञ्चगव्यं क्षिपेत्ततः॥ पुण्यग्भिरभिमन्त्र्यापः वाचा शुद्धिं लभेत्ततः। तेनैव स्नापयित्वा तु दाहं कुर्य्याद्यथाविधि॥ अब्लिङ्गाभिर्मन्त्रिताभिर्वामदेव्याभिरेव च। अन्यैश्च वारुणैर्मन्त्रैः संस्नाप्य विधिपूर्वकम्"॥ अथ प्रयोगः। देशकालौ सङ्कीर्त्त्य, गोत्राया अमुकप्रेतायाः सूतिकाया मरणसञ्जातदोषनिरासद्वारौर्ध्वदैहिकसंस्कारकरणयोग्यतासिद्ध्यर्थं चान्द्रायणत्रयप्रतिनिधिप्रायश्चित्तपूर्वकमुद्धृतोदकेनाष्टोत्तरशतस्नानादिकं कारयिष्ये इति सङ्कल्प्य, पूर्ववत्प्रायश्चित्तादिकं कृत्वा, कुम्भे सलिलमादाय, तत्र पञ्चगव्यं निक्षिप्यापोहिष्ठेत्यादिभिस्तिसृभिः, कयानश्चित्रइत्यादिभिस्तिसृभिः, एतोन्विन्द्रमित्यादिभिस्तिसृभिः, प्रमित्राय प्रार्यम्णे यदाकदा च मीढुषे घृतवती भुवनानामित्यादिभिर्वारुणीभिर्ऋग्भिरभिमन्त्र्य, ताभिः स्नापयित्वाऽन्यवाससा परिच्छाद्य विधिवद्दहेत्। मन्त्रा यथा। इति सूतिकामरणे दाहविधिः॥

अथ गर्भिणीमरणे दाहविधिः। तत्र प्रायश्चित्तादिकं पूर्ववत्। विशेषस्तूच्यते। गृह्यकारिकायाम्–"यदा गर्भवती नारी सशल्यं संस्थिता भवेत्। कुक्षिं भित्त्वा ततश्शल्यं निर्हरेद्यदि जीवति॥ प्रमीतं निखनेत्तं तु प्रायश्चित्तं ततः परम्। सा त्रयस्त्रिंशता कृच्छ्रैश्शुद्ध्यते शल्यदोषतः॥ सगर्भदहने तस्या वर्णजं वधपातकम्। प्रायश्चित्तं चरित्वा तु शुद्ध्यन्ति पापकारिणः"॥ उदरं वि-

दार्य्यं, गर्भस्थं शिशुं बहिर्निष्काश्य, पूर्ववत्प्रायश्चित्तादिपूर्वकं विधिवद्दहेत्। शल्यदोषनिवृत्त्यर्थं त्रयस्त्रिंशत्कृच्छ्राणि प्रत्याम्नायेन करिष्ये इति सङ्कल्पः। शिशौ जीवति सति तं ग्राममानयेत्। मृतश्चेन्निखनेत्। इति गर्भिणीमरणे दाहविधिः॥

अथ धनिष्ठादिनक्षत्रपञ्चके मृतस्य दाहविधिरुच्यते। तत्र मदनरत्ने गारुडे—"आदौ कृत्वा धनिष्ठार्द्धमेतन्नक्षत्रपञ्चकम्। रेवत्यन्तं सदा दूष्यमशुभं दाहकर्मणि॥ शवस्य तु समीपे तु क्षेप्तव्याः पुत्तलास्तदा। दर्भमय्यस्तु चत्वार ऋक्षमन्त्राभिमन्त्रिताः॥ ततो दाहः प्रकर्त्तव्यस्तैश्च पु... लकैः सह। सूतकान्ते ततः पुत्रैः कार्य्यं शान्तिकपौष्टिकम्"॥ ग्रन्थान्तरे तु,—"अथवा तद्दिने कार्य्यो दाहस्तु विधिपूर्वकः। धनिष्ठापञ्चके जीवो मृतो यदि कथञ्च न॥ त्रिपुष्करे याम्यभे वा कुलजान्मारयेद्ध्रुवम्॥ तत्रारिष्टनिरासार्थं विधानं समुदीर्य्यते। दर्भाणां प्रति...ः कार्य्याः पञ्चोर्णासूत्रवेष्टिताः॥ यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत्। प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः। प्रेतहर्त्ता पञ्चमस्तु नामान्येतानि च क्रमात्"॥ प्रतिमानां स्थानविशेषेषु स्थापनं, तासु तत्तन्नामभिराज्याहुतिं हुत्वा, तासु प्रत्येकं वक्ष्यमाणमन्त्राभ्यामाज्यं हुनेत्। एतत्सर्वं प्रयोगे प्रदर्शयिष्ये। अपरार्के,—"धनिष्ठापञ्चकमृते पञ्चरत्नानि तन्मुखे। प्रास्याहुतित्रयं तत्र हुनेद्दहवपामिति॥ ततो निर्हरणं कुर्यादेष साग्नेर्विधिः स्मृतः। इतरं निख-

नेदेव जले वा प्रतिपादयेत्" ॥ तत्रैव ॥ "कनकं हीरकं नीलं पद्मरागञ्च मौक्तिकम् । पञ्चरत्नमिदं प्रोक्तमृषिभिः पूर्वदर्शिभिः ॥ रत्नानाञ्चाप्यभावे तु स्वर्णं कर्षार्द्धमेव वा । सुवर्णस्याप्यभावे तु आज्यं ज्ञेयं विचक्षणैः" ॥ अथ प्रयोगः ॥ कर्त्ताऽऽचम्य, प्राणानायम्य, देशकालौ सङ्कीर्त्य, प्राचीनावीती, गोत्रस्यामुकप्रेतस्य धनिष्ठादिनक्षत्रपञ्चकमध्ये मरणसंसूचितास्मद्वंशारिष्टपरिहारार्थं पञ्चकमरणविधिं करिष्ये इति सङ्कल्प्य, दर्भमय्यः पञ्च प्रतिमाः कृत्वा, ऊर्णासूत्रेण वेष्टयित्वा, यवपिष्टेनानुलेपनं कृत्वा, शवसमीपे दक्षिणापवर्गं संस्थाप्य, क्रमेण नामानि निर्द्दिशेत् । प्रेतवाहः, प्रेतसखः, प्रेतपः, प्रेतभूमिपः, प्रेतहर्त्ता चेति । ततो नक्षत्रमन्त्रैरभिमन्त्रयेत् । छन्दोगानां नक्षत्रमन्त्राः । इदं वसो सुतमन्धस इति वसूनाम् । यदा कदा च मीढुष इति वरुणस्य । ईशान इमा भुवनानि ईयसे इत्यजैकपदः । अभित्वा शूरनोनुम इत्यहिर्बुध्न्यस्य । शुक्रन्ते अन्यदिति पूष्णः । ततो गन्धपुष्पादिभिः प्रतिमाः सम्पूज्य दाहसमये प्रथमां शिरसि, द्वितीयां नेत्रयोः, तृतीयां वामकुक्षौ, चतुर्थीं नाभौ, पञ्चमीं पादयोर्विन्यसेत् । ततस्तूष्णीमाज्यं संस्कृत्य प्रतिमासु निर्द्देशक्रमेण पूर्वोक्तनाममन्त्रैराज्याहुतीर्जुहुयात् । तत्र मन्त्राः । प्रेतवाहाय स्वाहा । प्रेतसखाय स्वाहा । प्रेतपाय स्वाहा । प्रेतभूमिपाय स्वाहा । प्रेतहर्त्रे स्वाहा ॥ तत उदकपात्रेण परितो जलधारां दत्वा, प्रेतमुखे पूर्वोक्तानि पञ्चरत्नानि निक्षि-

प्य, नाकेसुपर्णमिति त्र्यम्बकमिति मन्त्राभ्यां प्रत्येकं प्रतिमास्वाज्याहुतीर्जुहुयात् । ततस्तदग्नावाज्याहुतीत्रयं कुर्यात् । वह वपां जातवेद इति प्रथमा । इदं जातवेदसे न मम । जातवेदो वपया गच्छ देवानिति द्वितीया । इदं जातवेदसे न मम । यत्कुसीदमप्रदत्तमितितृतीया । इदं अग्नये न मम । ततो यथाविधि प्रतिमायुक्तं प्रेतं दहेत् । इति धनिष्ठादिनक्षत्रपञ्चकमरणे दाहविधिः ॥

अथ धनिष्ठापञ्चकशान्तिः । धनिष्ठापञ्चकमृतस्य दाहविधिमुक्त्वा तच्छान्तिमाह स्मृत्यन्तरे । "सूतकान्ते ततः पुत्रः कुर्य्याच्छान्तिकपौष्टिकं । कांस्यपात्रस्थितं तैलं वीक्ष्य दद्याद्द्विजन्मने ॥ ब्रह्मविष्णुमहेशेन्द्रवरुणप्रीतये ततः । माष-मुद्ग-यव-व्रीहिप्रियंग्वादीन्प्रयच्छति ॥ स्वर्णदानं रुद्रजाप्यं लक्षहोमो द्विजार्च्चनम् । गोभूदानं षडंशेन कुर्य्याद्दोषोपशान्तये" ॥ मदनरत्ने—"एकादशपलं कांस्यं तदर्द्धं वा तदर्द्धकम् । नवषट्त्रिपलं वाऽपि दद्याद्विप्राय शक्तितः" ॥ तथाऽन्यत्र । "स्वगृह्योक्तविधानेन वह्नेः संस्थापनं ततः । अन्वाधानं निर्वपणं देवतानां तथाहुतिः ॥ यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै क्रमात् ॥ विधिना वरणं कृत्वा एकैकामाहुतिं हुनेत् । कृष्णां गां कृष्णवस्त्रां च हेमनिष्कसमन्विताम् ॥ दद्याद्विप्राय शान्ताय प्रीतो भवतु मे यम" इति ॥ अथ प्रयोगः । सूतकान्ते, एकादशाहं कृत्वा वा, कर्त्ता स्नात्वा, नूतनवस्त्रे

धृत्वाऽऽचम्य, प्राङ्मुख उपविश्य, प्राणानायम्य, देशकालौ सङ्कीर्त्य, प्राचीनावीती, गोत्रस्यामुकप्रेतस्य धनिष्ठादिनक्षत्रपञ्चकमरणसंसूचितवंशारिष्टनिवृत्त्यर्थं धनिष्ठापञ्चकशान्तिकर्म करिष्ये इतिसङ्कल्प्य, उपवीती, आचार्य्यं ब्रह्माणं पञ्चर्त्विजश्च वृत्त्वा, तान् यथाविधि वस्त्रालङ्कारदक्षिणादानादिभिः सम्पूजयेत् । तत आचार्यः शुद्धे सुसमे प्रदेशे स्थण्डिले यथाविधि परिसमूहनादि कृत्वा, वरदनामानमग्निं प्रतिष्ठापयेत् । अत्र चरुतन्त्रम् । अस्मिन्कर्मणि भूजपपरिसमूहनप्रपदवैरूपाक्षजपा नियताः, काम्यत्वात् । प्रकृतिवत्पात्राण्यासाद्य होमार्थं तिल-यव-व्रीहि-समिदादीनासादयेत् । निर्वापकाले, वसुभ्यस्त्वा जुष्टं निर्वपामि । वरुणाय त्वा० । अजैकपदे त्वा० । अहये बुध्न्याय त्वा० । पूष्णे त्वा० । तण्डुलानोप्य अग्नौ चरुस्थालीं स्थापयेत् । स्थण्डिलस्यैशानदिग्भागे स्थण्डिलान्तरे नूतनवस्त्रमास्तीर्य्य, अक्षतैश्चतुरस्रं कृत्वोत्तरापवर्गतया धनिष्ठादीनि पञ्चनक्षत्राणि स्थापयेत् । तद्यथा । धनिष्ठां स्थापयामि० । शतभिषजं० । पूर्वाभाद्रपदं० । उत्तराभाद्रपदं० । रेवतीं स्थापयामि ॥ तत उत्तरापवर्गतया यथाविधि पञ्चकलशान् संस्थाप्य, तेषु प्रत्येकमेकैकां प्रतिमामग्न्युत्तारणपूर्वकं संस्थाप्य, तासु धनिष्ठादिदेवता आवाहयेत् । यथा । ॐ इदं वसो सुतमन्धः पिबासुपूर्णमुदरं । अनाभयिन्ररिमाते ॥ १ ॥ वसूनावाहयामि । वसव

३ २ ३ १
इहागच्छत इह तिष्ठत। ततो द्वितीयकलशे, यद्याकद्दा-
२ ३ १ २ ३ १ २ ३ १ २ १ २ २ ३ १ २ ३ २ ३ २
चमीढुषेस्तोताजरेतमर्त्यः। आदिद्वंदेत वरुणं विपागिरा
३ २ ३ १ २
धर्तारं विव्रतानाम् ॥ २ ॥ वरुणमावाहयामीत्यादि। तृती-
३ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २
यकलशे, ईशान इमा भुवनानि ईयसे युजान इंदोहरितः
३क २र १ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
सुपर्ण्यः। तास्ते क्षरंतु मधुमद्घृतं पयस्तव व्रते सोम
३ १ २
तिष्ठंतु कृष्टयः ॥ ३ ॥ अजैकपादमावाहयामीत्यादि। चतु-
३ १ २ ३ १ २ ३ १ २ १ २
र्थकलशे, अभित्वा शूर नोनुमो दुग्धा इव धेनवः। ईशा-
३ १ २र ३ २ ३ १ २ ३ १ २
नमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ ४ ॥ अहि-
३ १ २ ३ १
र्बुध्न्यमावाहयामीत्यादि। पञ्चमकलशे, शुक्रंते अन्यद्यजतं
२ ३ १ २र ३ १ २ ३ १ २ ३ २ ३ १ २र
ते अन्यद्विषुरूपे अहनी द्यौरिवासि। विश्वा हि माया अव-
३ १ २र ३ २ ३ १ २
सि स्वधावन् भद्रा ते पूषन्निह रातिरस्तु ॥ ५ ॥ पूषा-
णमावाहयामीत्यादि। छन्दोगानामेते मन्त्राः। अन्येषां
स्वशाखोक्ता ग्राह्या। ततः प्राणप्रतिष्ठामन्त्रैः प्राणप्रतिष्ठां
कृत्वा, तत्तन्मन्त्रैर्वस्त्रादीन्सर्वोपचारैः सम्पूज्य, तत्तन्म-
न्त्रानष्टोत्तरशतं तदर्द्धं वा ऽष्टाविंशतिवारं वा जपेत्।
शृताभिघारणाद्याज्यभागान्तं प्रकृतिवत्कृत्वा ऽवदानध-
र्मेण चतुरवत्तं पञ्चावत्तं वा चरुमवदाय, वसुभ्यः स्वाहा।

इदं वसुभ्यः न मम । वरुणाय स्वाहा । इदं व० न मम । अजैकपदे स्वाहा । इदं अ० न मम । अहये बुध्न्याय स्वाहा । इदं अ० न मम । पूष्णे स्वाहा । इदं पू० न मम ॥ इति चर्वाहुतिं कृत्वा वस्वादिमन्त्रैरेकैकस्याष्टावष्टावाज्याहुतीर्जुहुयात् । ततो दधिमध्वाज्यलिप्ताः समिध एकैकस्याष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिवारं वा वस्वादिमन्त्रैर्यथाशक्ति होतव्याः । ततः शान्त्यर्थं यमादिनाममन्त्रैस्तिलादिभिर्होमः । यमाय स्वाहा । धर्मराजाय स्वाहा । मृत्यवे स्वाहा । अन्तकाय स्वाहा । वैवस्वताय स्वाहा । कालाय स्वाहा । सर्वभूतक्षयाय स्वाहा । औदुम्बराय स्वाहा । दध्नाय स्वाहा । नीलाय स्वाहा । परमेष्ठिने स्वाहा । वृकोदराय स्वाहा । चित्राय स्वाहा । चित्रगुप्ताय स्वाहा । सर्वत्र तत्तनाम्ना त्यागो यमायेति वा । एतैर्नामभिर्यथाशक्त्या होमः । ततः स्विष्टकृतं हुत्वा कलशोदकेनाभिषेकः । तत उक्तप्रमाणं कांस्यपात्रं तैलेन पूरयित्वा, तत्रमुखं वीक्ष्य, हिरण्यताम्बूलादिसहितमिदं कांस्यपात्रं सूर्यदेवताकं प्राचीनावीती गोत्रस्यामुकप्रेतस्य धनिष्ठापञ्चकमृतिसंसूचितवंशारिष्टनिरसनार्थं तुभ्यमहं सम्प्रददे न मम इति दद्यात् । ततो माष-मुद्ग-यव-व्रीहि-प्रियंग्वादिधान्यानि प्रजापतिदैवतानि गोत्रस्यामुकप्रेतस्य धनिष्ठापञ्चकमृत्याद्युक्त्वा ब्रह्मविष्णुमहेशेन्द्रवरुणप्रीतये नानागोत्रेभ्यो नानानामभ्यो ब्राह्मणेभ्यः सम्प्रददे न मम । ततस्तिलदान-स्वर्णदान-गोदान-भूदानादिकं स्वकीयवित्तषष्ठांशेन कुर्यात् । ततः कलशानां

दानम्। इमं वसुकलशं सजलं सवस्त्रं सहिरण्यं सफलममुकगोत्रस्यामुकप्रेतस्य धनिष्ठापञ्चकमरणसंसूचितवंशारिष्टनिरसनार्थं प्राचीनावीती गोत्राय शर्मणे ब्राह्मणाय सम्प्रददे न मम। अनेन कलशदानेन वसवः प्रीयन्ताम्। प्रीयन्तां वसव इति प्रतिगृहीता वदेत्। एवं वरुणादिकलशचतुष्टयं दद्यात्। वरुणः प्रीयताम्। अजैकपात् प्री०। अहिर्बुध्न्यः प्री०। पूषा प्रीयताम्। ततो व्याहृतिहोमादिवामदेव्यगानान्तं प्रकृतिवत्कुर्य्यात्। ततो गोत्रस्यामुकप्रेतस्य धनिष्ठादिनक्षत्रपञ्चकमरणसंसूचितवंशारिष्टनिरसनार्थमनुष्ठितस्य शान्तिकर्मणो न्यूनातिरिक्तविधिसंपूर्णतासिद्धिद्वारा यथोक्तफलावाप्त्यर्थं भूरिदक्षिणाब्राह्मणभोजनादिकं करिष्ये इतिसङ्कल्प्य तथा कुर्य्यात्। ततः कर्म ब्रह्मार्प्पणं कुर्यात्। इति धनिष्ठापञ्चकमरणशान्तिप्रयोगः॥

अथ नारायणबलिप्रयोगः। तत्र बोधायनः "नारायणबलिं व्याख्यास्यामः अभिशस्तसुरापा आत्मत्यागिनां ब्राह्मणहतानाञ्च द्वादशवर्षाणि त्रीणि वा वारिमरणं यत्र यस्य तत्रतत्र कुर्वीत"। शौनकः। "शौनकोऽहं प्रवक्ष्यामि नारायणबलिं परम्। चाण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि॥ दंष्ट्रिभ्यश्च पशुभ्यश्च रज्जुशस्त्रविषाश्मभिः। देशान्तरमृतानाञ्च मृतानां चैव साधनैः। जीवश्राद्धमृतानाञ्च कनिष्ठानां तथैव च॥ यतीनां योगिनां पुंसामन्येषां मोक्षकांक्षिणाम्। पुण्यायाघक्षयार्थाय द्वादशेऽहनि

कारयेत्। द्वादश्यां श्रवणेऽद्धान्ते पञ्चम्यां पर्वणोस्तु वा" ॥ अथ शौनकबोधायनाद्युक्तप्रकारेण नारायणबलि-प्रयोगः ॥ कर्त्ता तीर्थादिकं गत्वा, देशकालौसङ्कीर्त्य, गोत्रस्यामुकप्रेतस्यामुकदुर्मरणोत्पन्नदोषनिवृत्तिद्वारौर्ध्वदै-हिककर्मकरणश्राद्धादिसम्प्रदानत्वयोग्यतासिद्ध्यर्थं नारा-यणबलिं करिष्ये इतिसङ्कल्प्य, शुद्धप्रदेशे स्थण्डिलं वि-धाय, शालिषु यवेषु वा कलशपञ्चकं यथाविधि संस्था-प्य, तत्र प्रत्येकं हैमीं ब्रह्मादिप्रतिमां निधाय, तासु क्रमे-ण ब्रह्मादीनावाहयेत्। ब्रह्मजज्ञानमिति ब्रह्माणमावाह-यामि। इदं विष्णुरिति विष्णुम्। आवोराजानमिति रु-द्रम्। नाके सुपर्णमिति यमम्। सेतुसाम्ना प्रेतम्। क्रमे-णावाह्य, तासां प्राणप्रतिष्ठां विधाय, तत्तन्मन्त्रैस्सर्वोप-चारैस्सम्पूज्य, ब्रह्मादिसूक्तजपं यथाशक्ति कुर्यात्। ब्रह्म-सूक्तसाम यथा–सोमोराजानमिति द्वे, हाऊ स्वराजा इति द्वे, वक्ष्यमाणपुरुषसूक्तं विष्णोः, आवोराजानमिति रुद्र-सूक्तं रुद्रस्य, अग्ने मृड इतिद्वे नाके सुपर्णमिति च यम-स्य, सेतु साम प्रेतस्य, एतत्सूक्तजपेन ब्रह्मादयः प्रीयन्ता-म्। ततश्शुद्धे प्रदेशे विधिवदग्निं प्रतिष्ठाप्य, चरुतन्त्रेण प्रकृतिवत्सर्वं कुर्यात्। निर्वापकाले विष्णवे त्वा जुष्टं निर्वपामीति विशेषः। होमानां बहुत्वादधिकञ्चरुं श्रपये-त्। चरुस्थालीमग्नावधिश्रित्य वा कलशस्थापनादिकं कु-र्यात्। आज्यभागान्ते प्रकृतिवदवदान धर्मेण चरुमवदा-य पुरुषसूक्तेन षोडशाहुतीर्जुहुयात्। पुरुषसूक्तमन्त्राः।

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य
पाꣳसुले ॥ १ ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदा-
भ्यः । अतो धर्माणि धारयन् ॥ २ ॥ विष्णोः कर्माणि
पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ ३ ॥
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षु-
राततम् ॥ ४ ॥ तद्विप्रासो विपन्यवो जागृवाꣳसः समिं-
धते । विष्णोर्यत्परमं पदम् ॥ ५ ॥ अतो देवा अवन्तु
नो यतो विष्णुर्विचक्रमे । पृथिव्या अधिसानवि ॥ ६ ॥
सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् । स भूमिꣳ
सर्वतो वृत्वात्यतिष्ठद्दशाꣳगुलम् ॥ ७ ॥ त्रिपादूर्ध्व उदै-
त्पुरुषः पादोस्येहा भवत्पुनः । तथा विश्वꣳव्यक्रामदशा-
नानशने अभि ॥ ८ ॥ पुरुष एवेदꣳसर्वं यद्भूतं यच्च
भाव्यं । पादोस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ९ ॥
तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः । उतामृतत्व-
स्येशानो यदन्नेनातिरोहति ॥ १० ॥ ततो विराडजायत

३ २ ३ २ ३१२ २ १ १ २ ३ २उ ३ १ २
विराजो अधिपूरुषः । सजातोअत्यरिच्यत पश्चाद्भूमिमथो
३२ १२ ३ १ २ ३ १ २ ३ २ ३ १
पुरः ॥ ११ ॥ सोमः पवते जनिता मतीनां जनिता दिवो
२ ३ १ २ ३ २ ३ १ २२ ३ १ २२ ३ १ २
जनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्र-
३ १ २२ १ २२ ३ २ २ ३
स्य जनितोत विष्णोः ॥ १२ ॥ किमित्ते विष्णोपरिचक्षि
१ २२ १ ३ २ ३ १ २ १ २२ ३ १ २२ ३
नाम प्रयद्ववक्षे शिपिविष्टो अस्मि । मावर्पो अस्मदपगूह
२उ ३ १ २ ३ २ ३ १ २ १ २२ ३ १ २
एतद्यदन्यरूपः समिथे वभूथ ॥ १३ ॥ प्रतत्ते अद्य शि-
३ २ ३ २ ३ १ २ ३ २ १ २
पिविष्ट हव्यमर्यः शंसामि वयुनानि विद्वान् । तं त्वा
३२ ३ १ २ ३ १२ ३ १ २२ ३ २
गृणामि तवसमतव्यान्क्षयंतमस्य रजसः पराके ॥ १४ ॥
१२ ३ १ २ ३ १ २
वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट
३ २ १ २ ३ १ ३ १ २ ३ १ २ ३ २
हव्यम् । वर्द्धंतु त्वा सुष्टुतयो गिरो मे यूयंपात स्वस्ति-
३ १ २ १ २ ३ २ २ ३ १ २ ३ १२ २२
भिःसदा नः ॥ १५ ॥ प्रथश्च यस्य सप्रथश्च नामानुष्टुभ-
३ १ २ ३ २ ३ १२ २२ २ २ ३ १ २
स्य हविषो हविर्यत । धातुर्द्युता नात्सवितुश्च विष्णो र-
३ १२ २२ ३ १ २
थंतरमाजभारावशिष्ठः ॥ १६ ॥ एतासामन्ते स्वाहाका-
रोच्चारणपूर्वकं होमाः कर्त्तव्याः । सर्वत्र इदं नारायणाय
न मम । तत इदं विष्णुरितिमन्त्रेणाष्टोत्तरसहस्रं शतं
वा तिलादिद्रव्येण होमः । ततस्स्विष्टकृतादितन्त्रशेषं प्र-

कृतिवत्समापयेत्। ततो देवसमीपे पुरोभागे मधुघृततिलमिश्रितेन पृथक्पक्कौदनेन प्राचीनावीती दक्षिणाग्रान् कुशानास्तीर्य्य, तूष्णीं दशसु स्थानेष्ववनेजनं कृत्वा, क्रमेणामुकगोत्रामुकप्रेत विष्णुरूप एष ते पिण्ड उपतिष्ठतामिति पितृतीर्थेन दश पिण्डान्दत्वा 'आयाम आयाम' इतिसाम्ना 'यन्मे यम वैवस्वतमिति' पिण्डानभिमन्त्र्य, शङ्खोदकेन पुरुषसूक्तेन च कुशैः पिण्डोपरि धारां दत्वा, गन्धादिकं प्रक्षिप्य, पुरुषसूक्त मन्त्रैः प्रत्यृचममुकगोत्रं प्रेतन्नारायणरूपं तर्पयामीति तर्पयेत्। ततः कलशसमीपे पुरुषाहारपरिमितमन्नमादायोपवीती ब्रह्मन्नेष ते बलिः। विष्णो एष ते बलिः। रुद्र एष ते बलिः। सपरिवार यम एष ते बलिः। इति बलिं दत्वा दर्भेण बलीन्स्पृष्ट्वा, ब्रह्माविष्णुमहादेवा यमश्चैव सकिङ्करः। बलिं गृहीत्वा कुर्वन्तु प्रेतस्य च शुभां गतिम्॥ इति सम्प्रार्थ्य, प्रतिदैवतं त्रिविधं फलं समर्प्य, शर्करामधुगुडघृतानि निवेद्य, पिण्डानप्सु प्रक्षिपेत्। ततस्तस्मिन्दिने रात्रावयुग्मान्ब्राह्मणान् पञ्च सप्त नव वा निमन्त्रयेत्। यथा—श्वः करिष्यमाणनारायणबलिकर्मणि विहितश्राद्धपञ्चके ब्रह्मार्थे भवता क्षणः कर्त्तव्यः। एवं विष्णुरुद्रयमेभ्यः प्रत्येकं ब्राह्मणान्देवधर्मेण निमन्त्र्य पितृधर्मेणैकं गुणवन्तं ब्राह्मणं प्रेतार्थे निमन्त्रयेत्। ततः कर्त्ता रात्रावुपोष्य, जागरणं कुर्यात्। ततश्श्वोभूते मध्याह्ने कलशस्थान् ब्रह्मादीनभ्यर्च्य, नारायणबलौ ब्रह्मादीनुद्दिश्य विहितं श्राद्धपञ्चकमेकोद्दिष्ट-

विधिना करिष्ये इतिसङ्कल्प्य तथा सर्वं कुर्यात् । विशेषस्तूच्यते । ब्रह्मन्नेष ते पिण्डः । एवं विष्णुरुद्रसपरिवारयमेभ्यः पिण्डान् दत्वा ऽमुकगोत्रामुकप्रेत विष्णुरूप एष ते पिण्डः । इति पञ्चमं पिण्डं दद्यात् । आचान्तान्ब्राह्मणान्दक्षिणादिभिः परितोष्य, प्रेतार्थे ऽभ्यर्च्चितं गुणवन्तं ब्राह्मणं प्रेतबुद्ध्या स्मरन् गोभूहिरण्यदानादिभिः परितोषयेत् । ततोऽक्षय्यस्थाने तुलसीकुशयुतशङ्खधारां ब्राह्मणानां हस्तेषु दद्यात् । ततः पवित्रपाणयो ब्राह्मणा गोत्राय प्रेताय विष्णुरूपायेदं तिलोदकमुपतिष्ठतामिति प्रत्येकं दद्युः । ततस्सुतासोमधुमत्तम इति कलशस्थान्देवानुद्वास्य, ब्राह्मणेभ्यो दत्वा, तान्विसृज्य, स्नात्वा, स्वजनैः साकं स्वयम्भुञ्जीत । इति नारायणबलिप्रयोगाः ॥

अथ कृच्छ्रादिप्रत्याम्नायाः । "प्राजापत्ये तु गामेकां दद्यात्सान्तपने द्वयम् । पराके तप्तकृच्छ्रातिकृच्छ्रे तिस्रस्तु गास्तथा"–इति चतुर्विंशतिमते मिताक्षरायाम् ॥ पुनस्तत्रैव । "अष्टौ चान्द्रायणे देया" इति । प्राजापत्यादिप्रत्याम्नायाः स्मृत्यन्तरेऽपि द्रष्टव्याः ॥

अथ विच्छिन्नश्रौताग्नेर्मृतस्य दहनार्थं प्रेताधानप्रयोगः । त्रिकाण्डमण्डने । "प्रेतं स्वाग्न्यालये क्षिप्त्वा गार्हपत्यानले ऽरणी । सन्निधाप्यारणो मन्थेद्यस्येतियजुषा ततः ॥ प्रणीय पावकं तूष्णीं द्वादशोपात्तसर्पिषा । तूष्णीं हुत्वा ततः कुर्यात्प्रेतेऽमात्या इति क्रियाम्" ॥ अथ प्रयोगः । श्रौताग्निविच्छेददिनगणनपूर्वकमुक्तप्रायश्चित्तं कुर्यात्-

त्। अथ वक्ष्यमाणं कर्म प्राचीनावीती दक्षिणाभिमुखः कुर्यात्। यजमानायतने प्रेतं संस्थाप्य, गार्हपत्यादीन्यायतनानि सकृत्सकृत्संस्कृत्य, गार्हपत्यायतनस्य पश्चादरणी संस्थाप्य, यस्याग्नयो जुह्वतो मांसकामास्सङ्कल्प्यन्ते यजमानं मांसं जानते हविषे साविताय स्वर्गं लोकं परेतमिमं नयन्तु। इतियजुषा मथित्वाऽग्निं तूष्णीं गार्हपत्ये निधाय तूष्णीमाहवनीयं प्रणयति। तत आज्यस्थाल्यामाज्यं निरूप्य, गार्हपत्यस्य दक्षिणार्द्धेऽधिश्रित्य, दक्षिणत उद्वास्य, पवित्राभ्यामुत्पूयावेक्ष्य, सकृत्स्रुक्स्रुवौ संमृज्य, स्रुचि द्वादशकृत्व आज्यं गृहीत्वा ऽऽहवनीये तूष्णीं जुहुयात्। उक्तप्रेताधानं कृत्वा, दाहादिकं कुर्यात् एवं पत्नीमरणेऽपि॥ इति प्रेताधानप्रयोगः॥

अथारण्योस्समारोपितेऽग्नौ मृतस्याग्नेरुत्पत्तिविधिः। त्रिकाण्डमण्डने–"अग्नावरण्योरारूढे प्रमीयेत पतिर्यदि। प्रेतं स्पृष्ट्वा मथित्वाऽग्निं जप्त्वा चोपावरोहणम्॥ घृतश्च द्वादशोपात्तं तूष्णीं हुत्वा शवक्रिया"॥ अथ प्रयोगः। प्रेतस्य दक्षिणहस्तेनारण्योस्स्पर्शं कारयित्वा उपावरोह जातवेद इमं प्रेतं स्वर्गाय लोकाय नय आयुः प्रजा॰ रयिमस्मासु धेहि प्रेताहुतिश्चास्य जुषस्व स्वाहा॥ इतिमन्त्रं पठन्नग्निम्मथित्वा उपावरोह्याग्निं गार्हपत्ये निधाय, तूष्णीमाहवनीयं प्रणीय, पूर्ववत्संस्कृतेनाज्येन द्वादशगृहीतेन तूष्णीमाहवनीये हुत्वा, पुनः प्रणीय, दाहादिकं कुर्यात्॥

नष्टेष्वग्निष्वरण्योर्नाशे मृतस्याग्नेरुत्पत्तिविधिः । त्रिकाण्डमण्डनः । "नष्टेष्वग्निष्वथारण्योर्नाशे स्वामी म्रियेत चेत्। आहरेदरणीद्वन्द्वं मनोज्योतिर्ऋचा ततः" ॥ अन्ये तावदरणी आनीय तदुपरि प्रेतहस्तं निधाय अयन्ते योनिरितिमन्त्रं पठित्वा, पूर्ववत्प्रेताधानं कुर्यात् । सर्वेषां सान्तपनाग्नीनां नाशे गार्हपत्याग्निं मथित्वाऽऽहवनीयदक्षिणाग्नी प्रणीयानादिष्टप्रायश्चित्तमपसव्येन कृत्वोखाधिश्रयणादिकं कुर्यात् । गार्हपत्यमात्रस्य नाशे तं मथित्वाऽनाज्ञातप्रायश्चित्तं कुर्यात् । न सान्तपनाग्निमुत्पादयेत् । आहवनीयदक्षिणाग्न्योरेकस्य द्वयोर्वा विनाशेऽनाज्ञातप्रायश्चित्तार्थमग्निमुद्धृत्य, प्रायश्चित्तं कृत्वा, दहनार्थं पुनरुद्धरेत् ॥

अथ केनापि निमित्तेन चिताग्निनाशे यज्ञपार्श्वग्रन्थे, "यजमाने चितारूढे पात्रन्यासे कृते सति । वर्षाद्यभिहते वन्हौ कथं कुर्वन्ति याज्ञिकाः ॥ तदर्द्धदग्धकाष्ठेन मन्थनं तत्र कारयेत् । तच्छेषालाभतोऽन्येन दग्धशेषेण वा पुनः । हुत्वाज्यं लौकिके वह्नौ दग्धशेषं दहेत्तु वा ॥ वर्षादिना चिताग्निनाशे ऽर्द्धदग्धे ऽरणी गृहीत्वा, अग्निं मथित्वा, तेनाग्निना दग्धशेषं दहेत् । तदलाभे लौकिकाग्नौ सर्वव्याहृतीर्हुत्वा तेनाग्निनादहेत् । "दग्धशेषस्याप्सु प्रक्षेप" इति केचित् ॥

अथ विच्छिन्नस्मार्त्ताग्नेर्मृतस्याग्न्याधानविधिः । विच्छिन्नदिनगणनया तदुक्तप्रायश्चित्तं कृत्वा, अग्न्यायतनं

संस्कृत्य, प्रेतं स्वायतने संस्थाप्य, तद्धस्तमरण्योर्निधाय, यस्येतियजुषा मथित्वा ऽऽयतनेनिधायाज्यं संस्कृत्य, तूष्णीं पूर्णाहुतिं जुहुयात्। आहरणपक्षे अन्यतोऽग्निमानीय, प्रेतं संस्पृश्य, यस्याग्नय इतिपूर्वोक्तमन्त्रेणाग्निं जपित्वा, तमायतने निधाय, पूर्ववत्पूर्णाहुतिं जुहुयात्। समारोपणपक्षे मन्थनोपावरोहणादिकं पूर्ववत्कुर्यात्। अरण्योर्विनाशे पूर्ववत्। नात्राहवनीयप्रणयनमसम्भवात्। इति विच्छिन्नस्मार्त्ताग्नेर्मृतस्य कृत्यविधिः॥

अथाहिताग्नौ प्रोषितमृते दाहविधिः। "आहिताग्नौ विदेशस्थे मृते सति कलेवरम्। निधेयं नाग्निभिर्यावत्तदीयैरपि दह्यते"इति ब्राह्मोक्तेः॥ सतिसम्भवे मृतशरीरं तैलद्रोण्यां निक्षिप्याग्निहोत्रसमीपे नेयम्। असम्भवे छन्दोगपरिशिष्टे–"विदेशमरणे ऽस्थीनि आहृत्याभ्यज्य सर्पिषा। दाहयेदूर्णयाऽऽच्छाद्य पात्रन्यासादि पूर्ववत्॥ अस्थ्नामलाभे पर्णानि पलाशान्युक्तयावृता। दाहयेदस्थि संख्यानि ततः प्रभृति सूतकम्"॥ मृतस्य शरीरस्य दिनान्तरे दहने पर्य्युषितप्रायश्चित्तं स्मृतिरत्नावल्याम्। "शवं रात्र्युषितश्चेत्त्रीन् कृच्छ्रान्कृत्वा दहेत्सुतः"। अङ्गिराः,–"ऊर्द्ध्वोच्छिष्टाधरोच्छिष्टे ह्यन्तरिक्षमृतेऽपि च। कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणेऽपि च"॥ गृह्यकारिकायाम् "खट्वायां मरणे चैव त्रींस्त्रीन्कृच्छ्रान्प्रकल्पयेत्। सप्तान्त्यजैस्तु संस्पृष्टो मृतो दैवात्कथञ्चन॥ तस्यैकत्रिंशता कृच्छ्रैः शुद्धिरुक्ता मनीषिभिः। कुणपे त्वर्द्धदग्धे

तु चितिः स्पृष्टाऽन्त्यजातिभिः । तत्स्पर्शनं दूषणञ्च त्रिभिः कृच्छ्रैर्विशुद्ध्यति" इति ॥ अथ प्रयोगः । दूरदेशप्रवसत आहिताग्नेर्मरणश्रवणे तच्छरीरस्यास्थ्नां वाऽग्निहोत्रगृहग्रामपर्य्यन्तं यावता कालेनानयनं सम्भवति तावत्पर्य्यन्तं गृहे सायम्प्रातरग्निहोत्रं पुत्रादिभिः कर्त्तव्यम् । अतो मृताग्निहोत्रप्रयोग उच्यते । प्राचीनावीती दक्षिणाभिमुखः सङ्कल्प्याहवनीयमात्रं प्रणीयाहवनीयं दक्षिणसंस्थमप्रादक्षिण्येन दक्षिणाग्रैर्दर्भैः परिस्तृणुयात् । दक्षिणत उत्तरतः प्रागग्रैरेवाहवनीयं तूष्णीमप्रादक्षिण्येन परिषिच्य, न प्रेषस्तूष्णीं गां दोहयित्वा, गार्हपत्यदक्षिणार्द्धे उष्णभस्मन्यधिश्रयेत् । नाभिद्योत इति, न पर्य्यग्निकरोति । न संक्षालनं, न निनयनम्, दक्षिणत उद्वासनम्, न त्रिः, तूष्णीं स्रुक्स्रुवावादाय, तूष्णीं प्रताप्य, हस्तेन सम्मृज्य, सकृदुन्नयेत् । ॐ नेष्यामीति न प्रेषः । अधोमुखेन स्रुवेण स्रुचि हविषः प्रक्षेपः । न मध्ये कूर्च्चे आसादनम् । स्रुग्दण्डस्याधोभागे समिधं धारयन्, गार्हपत्यस्य दक्षिणतो गत्वा ऽऽहवनीयस्योत्तरतो दक्षिणाभिमुख उपविश्याहवनीये तूष्णीं दक्षिणाग्रां समिधमाधाय तूष्णीं पितृतीर्थेन निश्शेषं सकृदेव हविर्जुहुयात् । नातः परमग्निहोत्रम् । इति प्रेताग्निहोत्रविधिः । ततो मृतशरीरस्यास्थ्नां वाऽग्निहोत्रदेशसीमायामानयने कृते तत्समीपे ऽग्नीन् पात्राणि च नीत्वा, विदेशमरणप्रायश्चित्तं पराकद्वयमष्टौ कृच्छ्रान्वा कृत्वा, शरीरे सति शवपर्य्युषितत्वदोषप्राय-

श्चित्तार्थं कृच्छ्रत्रयञ्च कृत्वा, विधिवद्दहेत् ॥ अस्थिदाहे तु,—"आहृतान्यस्थीनि कृष्णाजिनोपरि पुरुषाकारेण कृत्वाऽऽज्येनाभ्यज्य, बर्हिषाऽऽच्छाद्य, देशान्तरमरणप्रायश्चित्तपूर्वकं विधिवद्दहेत्" ॥ इत्याहिताग्नौ प्रोषितमृते दाहविधिः ॥

अथास्थ्नामलाभे पर्णदाहविधिः । पूर्ववद्विदेशमरणप्रायश्चित्तं कृत्वा, देशकालौ सङ्कीर्त्य, विदेशमृतस्य विधिवद्दहनार्थं पालाशैर्दर्भैर्वा पुरुषाकृतिं करिष्ये इति सङ्कल्प्य, शुद्धभूमौ कृष्णाजिनमास्तीर्य्य, तदुपर्य्येकं शरं दक्षिणोत्तरायतं निधाय, पलाशवृन्तानि पुरुषाकारेण स्थापयेत् । तद्यथा । शिरसि चत्वारिंशत् ४० ग्रीवायां दश १० दक्षिणबाहौ पञ्चाशत् ५० वामबाहौ पञ्चाशत् ५० हस्ताङ्गुलीषु दश १० वक्षसि विंशतिः २० उदरे त्रिंशत् ३० मेढ्रे चत्वारि ४ वृषणयोः षट् ६ दक्षिणोरौ पञ्चाशत् ५० तथैव वामे ५० जङ्घादिपादतलान्तं प्रत्येकं पञ्चदश १५ पञ्चदश १५ । पादाङ्गुलीषु दश १० एवं षष्ठ्युत्तरत्रिशतसंख्याकैः पालाशैर्दर्भैर्वा प्रेताकृतिं कृत्वोर्णासूत्रेण दर्भैश्च बध्वा जलमिश्रितयवपिष्टेनानुलिप्य शुद्धमृदा चानुलिप्य विधिवद्दहेत् ॥ इति पर्णदाहविधिः ॥

इति श्रीमद्राजाधिराजश्रौतस्मार्तानुष्ठानतत्परोदयप्रतापाद्यादत्तदेववर्म्मसोमयाजिनो निदेशेन सुब्रह्मण्यविदुषा विरचितेयमन्त्येष्टिदीपिका समाप्ता ॥ शुभम् ॥

# अन्त्येष्टिदीपिकाशुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ. | पं. |
|---|---|---|---|
| वदन्ति | यद्दन्ति | १ | ७ |
| तानि प्रपद्यते | तानि प्रपद्ये | १४ | ३ |
| ३ | ३ | | |
| दा३४२सी | दा२३४सी | १७ | १ |
| प्रत्ना | प्रात्ना | ० | ५ |
| जगयः | जगतः | ० | १२ |
| २२ १ | २ १ | | |
| निषङ्गि | निषङ्गि | २० | ४ |
| उरुमध्ये | ऊरुमध्ये | २२ | ९ |
| | २ | | |
| जिती | जिती | २४ | १३ |
| – १ | – २ | | |
| भारया | भारया । | २६ | ११ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पं. |
|---|---|---|---|
| २ १ | १ १ | | |
| ण्य रू | ण्य । रू | २७ | ९ |
| ३२ | ३२ | | |
| औ हो | औ हो | ३३ | १ |
| मासन | मासनं | ३९ | १४ |
| अपोशना | आपोशना | ४९ | १७ |
| त्वमनु | त्वामनु | ५६ | १ |
| स्पृष्टो | स्पष्टो | ६६ | २ |
| शर्मति | सर्मति | ० | २२ |
| वसुभ्यः | वसुभ्यो | ७४ | १ |
| मावर्यों | मावपों | ७८ | ५ |
| वापनः | वापुनः | ८२ | १६ |

इति शुद्धिपत्रम् ।

